enjoyer, and the thing he enjoys come from the same general cause, the Brahman, wherefore no distinction can be between them. We can plainly see that here there is no question of non-distinction between the Brahman and jiva.

The Pandit extols Advaita not because he has realised and appreciated the truth of it but because the accident of birth has made him belong to it. Otherwise he would not hesitate to make frivolous attacks even against Sankara in his usual way with promiscuous heaps of clumsy words full of tautology and teeming with mistakes grammatical, syntactical and logical.

As in the ordinary life, so in the literary career also, everybody must try to be honest, true and merciful. A scholar should discipline himself so as not to write even a single word unless it is absolutely necessary and of some use to somebody. What is the use of writing volume after volume if it is not going to add to the true knowledge of the people? Our friend, it is a great pity, has not advanced a single new argument either in support of Advaita or in refutation of any other school of Vedanta. On the other hand he repeats the old, effete story which had been long ago criticised and proved worthless by some author or another. Universities are public bodies which must keep themselves free from all sectarian influences and partiality. If works such as Sastri's introduction in question, are continued to be published by

any public body it will render itself open to the charge of not only encouraging pedantism and psuedo-scholarship but of showing undue and unreasonable partiality to one school of philosophy against another. Our Sastri himself must be careful not to abuse his position and bring bad name to the institution that entertains him. His unchecked enthusiasm for offensive against other schools has led him to quarrel with men of his own camp. He disagrees in many a point with Ramakrishna the old commentator of the Vedanta Paribhasha, who is a first rate Naiyayika as well as a profound Advaita Vedantin. His commentary is a learned one and only those well-versed in Nyaya can rightly and fully understand it. My friend in his usual way casts a superficial glance upon it and, working out things by his own imagination, begins, often quoting irrelevant authorities, to pour wrong criticisms which are as frivolous as those we have seen above against the Sri Bhashya. I have already begun making preparations for vindicating Ramakrishna but I don't know when I shall be able to finish and publish the work. I almost begin to shed tears when I perceive the lowest level to which the panditship which once formed the world-praised glory of this our land has unfortunately drifted itself. The Eastern Sanskrit scholarship of to-day has become as bad as that of the West if not worse.

If such a state of things must go and real benefit is to be obtained, as much labour and

money must be spent as has been spent till now and the whole Sanskrit Literature studied afresh with the help of competent hands. Unless encouraged, no man to-day will aspire to become a profound pandit. Old method of learning Sastras almost died away. The few colleges conducted on modern lines which continue to exist with constant fear of some kind of danger or other turn out pandits whose acquaintance with this Sastra or that is only superficial and who as soon as they get a place are glad to forget even that small acquaintance.

It must be the concern of the Universities to see that there are many profound scholars in Sanskrit as well as in other fields. They should provide a chair to each branch of the literature: Purva Mimamsa, Dvaita, Advaita and Visishtadvaita, Nyaya, Vyakarana and Sahitya and appoint really eminent pandits with a decent remuneration. The best way of encouraging true and erudite scholarship is to create an impression on all sides that merits alone will count and guide when filling up places. The absence of such an impression is one of the causes, if not the only cause, which is responsible for the gradual decline of scholarship. Recommendations and communal and sectarian considerations override the claim of qualifications, which naturally results on the part of the pandits in much energy being spent towards obtaining favours of great men rather than proficiency in Sastras. In case of equal qualifications there is no harm if some

7

favour is shown on account of religion or community. Even to-day there are a few scholars whose proficiency in Sastras is indeed very great but who because of want of opportunity remain in obscurity repenting for the number of years spent in study, while men with imperfect and scanty knowledge placed in position are experiencing a good deel of difficulty in collecting materials for producing some work and quite unable to penetrate into the subject-matter of Sastraic works, wholly engage themselves in much unimportant discussions such as whether the author of the Dhavanikarikas is the same as that of the Vritti or different *

---

Now I should stop. As I have already said, I felt it my bounden duty to show the present circumstances of the Sanskrit scholarship and I think, now I have done it and my heart feels free and unburdened. Whatever impression a scholar may form after reading the foregoing pages, I must be quite indifferent as taught by the following verses of the Bhagavad Gita:

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥
मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमान् लोकान् न हन्ति न निबध्यते ॥

---

* If the single sentence in the Lochana (p. 60) प्रकाशित इति । मया वृत्तिकारेण सतेति भावः had been taken into consideration and well understood there would have been no occasion at all for raising such a question.

स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ॥

---

Now my thanks are due to the subscribers of the Udyana Patrika with the Sastraic supplement, but for whose help and encouragement it would not have been possible at all to publish the *Kavyalankara* of Bhamaha with the commentary. In case the Universities, the Government and the general public show more sympathy towards the journal (which of course is not in a position any way better than a Sanskrit journal is expected to be in) I am sure it will be able to render greater service to the Sanskrit Literature and through it to the world at large.

To write original works is the supreme enjoyment in my life. But to copy the original and prepare indices, I will prefer doing anything to them. Such a difficult task here was undertaken by S. Vijayaraghavan whom I heartily bless.

Tantrodyanam
23rd Dec. 1933.

D. T. T.

# ERRATA.

| Page. | Line. | For | Read |
|---|---|---|---|
| 5 | 3 | doplorable | deplorable |
| 6 | 21 | epedemics | epidemics |
| 11 | 16 | speach | speech |
| 14 | 1 | dorivation | derivation |
| 15 | 8 | treasurer | treasure |
| 15 | 12 | presedes | precedes |
| 16 | 17 | ia | in |
| 18 | 4 | Mecdonell | Macdonell |
| 23 | 31 | de | be |
| 27 | 8 | grammer | grammar |

श्रीः ॥

# उपोद्घातः ॥



'पूर्वेभ्यो भामहादिभ्यः सादरं विहिताञ्जलिः ।'

इति प्रतापरुद्रयशोभूषणे प्रथममस्माकं भामहनामश्रवणम् । ततः परं कालक्रमेणालङ्कारकौस्तुभध्वन्यालोकादिष्वलङ्कारग्रन्थेषु परिचीयमानेषु भूय एतन्नामधेयं श्रवणगोचरमभवत् ; भामहीयाः श्लोकाश्च कतिपये खण्डशः पठिता आसन् । यदा त्रिवेदिमहाशयेन महता व्यवसायेन सम्पादितं बहुविषयपरिशोभितं प्रतापरुद्रयशोभूषणं अलभामहि तदैव तस्यान्ते संयोजितं भामहीयं काव्यालङ्कारं समग्रं साक्षादवलोकितुमशक्नुम । स्वाभाविकेन प्राचीनग्रन्थावलोकनकौतूहलेन सकृत् तमवलोक्य तावति न व्यरमाम । किन्तु मद्रराजधानीविश्वविद्यालयीय- 'प्राच्यविद्येश्वर' (Master of Oriental Learning) बिरुदलाभहेतोः 'काव्यलक्षणम्' नाम भाषान्तरमयं उपन्यासविशेषं * लेखितुं विषयसङ्कलनं कुर्वन्तः बहुषु प्राचीनालङ्कारग्रन्थान्तरेष्विव अत्रापि गाढं परिचयं कर्तुं प्रावर्तामहि । तदाऽस्मिन् तत्र तत्र दृष्टा अर्थप्रतीतिविघातिन्योऽशुद्धयः, यदि शक्यं तर्हि कथमपि परिश्रम्य शोधनं कर्तव्यमिति मतिमुदपादयन् । ततो दिनेषु गच्छत्सु तैस्तैः दुर्व्याख्यातान् भामहश्लोकान् पश्यतां अनतिविस्तृतं व्याख्यानमेव किमपि काव्यालङ्कारस्य कर्तव्यमित्यभासीत् । सद्य उपक्रान्तमिदं व्याख्यानं षड्भ्यो वर्षेभ्यः परमपि वा संप्रति समाप्तिमगच्छदिति नूनं भगवताऽतिमात्रमनुग्रहयालुनाऽभावि । अतीतेष्वेषु षट्सु वर्षेषु इह तत्तदशुद्धिशोधने तात्पर्योपलंभे च यं क्लेशभारमन्वभवाम स इदानीं चिन्त्यमानः

---

* अस्य तृतीयपरिच्छेद इहान्तेऽनुबद्धः ।

"प्राप्तानि दुःखान्यपि दण्डकेषु
सञ्चिन्त्यमानानि सुखान्यभूवन् ।" (रघु. १४-२५)

इति कविसार्वभौमोक्तरीत्या सुखरूपतामेति । यत्राशुद्धः पाठः तत्र नूनं बुद्धिः स्खलति । एवं स्खलिता बुद्धिः तत्रत्यामशुद्धिमुपलभ्य परिहर्तुमासक्ता भवति । ततः परमियं दशा जायते यत्र

"पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ।
प्रलपन् विसृजन् गृह्णन्नुन्मिषन् निमिषन्नपि ॥"

तमेव विषयं चिन्तयामि ; न तं विषयं क्षणमपि विस्मर्तुं शक्नोमि । एवमविरतं तांस्तान् विषयान् ध्यायतामस्माकं क्वचित् बहूनि दिनानि, क्वचिद्बहवो मासाः, क्वचित् द्वित्रास्संवत्सरा अपि अतियन्ति । अन्ते

'श्रुतेन यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम् ।'

इति दण्ड्युक्तरीत्या वाग्देवता कमप्यनुग्रहं करोति, येन विद्युदिव झटिति चिरान्विष्टोऽर्थः प्रकाशते । सद्यः परं ब्रह्मेव साक्षात्कृतवतां कोऽप्यानन्दो हृदयमास्कन्द्य चिरं परवशयति । इत्येवंविधः कोऽपि क्रमः एतद्व्याख्यानसमापनावध्यन्ववर्तत । यथा लोके बाला निलयनक्रीडां कुर्वन्तो रसमनुभवन्ति तथैव काव्ये कविसहृदया इति काव्यविमर्शननिपुणा अभिदधति । कविरर्थान् निगूहति । सहृदयस्तानन्विष्य उपलभ्य रसयति । एवंविधा निलयनक्रीडा इह भामहग्रन्थेऽस्माभिरसकृदन्वभूयत । कालो लेखकप्रमादश्चात्र शुद्धपाठानां निलापयितारौ । तदुपलम्भप्रयत्नोऽस्माकम् ।

अनिबद्धं च काव्यादि तत्पुनः पञ्चधोच्यते । (१-१८)

इति स्थितः पाठः । अत्र काव्यादीत्यनन्वितम् । काव्यस्यैवात्र विभागेनादिपदस्यानपेक्षितत्वात् । काव्यवाचिनस्तच्छब्दस्य सत्त्वेन काव्यपदस्याप्यनुपयुक्तत्वाच्च । यद्यप्यल्पेयमशुद्धिः ; अनया वाक्यार्थप्रतीतेर्नास्ति कश्चिद्विघातः ; तथाऽपि यावदियं न शोधिता तावदुपरि बुद्धिर्न प्रावर्तत । तस्मात्तदेकासङ्गिनी धीरस्माकमजायत । सूक्ष्मतरधियामत्र अधिकक्लेशस्यासम्भावितत्वेऽपि पञ्चदशसु दि-

नेष्वतीतेष्वेव 'काव्यज्ञैः' इति भवितुं युक्तमिति अकस्मात् स्फूर्तिरभवत्। एवम्

क्लिष्टं व्यवहितं विद्वैरन्यार्थं विगमे यथा।
विजह्रुस्तस्य ताः शोकं क्रीडायां विकृतं च तत्॥ (१-४०)

इति श्लोकार्थावगमात् प्राक् तदेकचिन्तनपरो दिनगणोऽत्यगात्। यः पुनः कलाविरोधोदाहरणश्लोकः

ऋषभात्पञ्चमात्तस्मात् सषड्जं धैवतं स्मृतम्। (४-३४)

इत्यादिः ; स वर्षत्रयमस्माकमभेद्योऽभवत्। सङ्गीतशास्त्रे निपुणतया प्रसिद्धानां केषांचित् सविधे इमं प्रादर्शयाम। 'प्राचीनग्रन्थस्य अद्यतनसङ्गीतशास्त्रवैदुष्यस्य च नास्ति कश्चित्सम्बन्धः। नात्र किञ्चिद्वयं वक्तुं शक्नुमः' इति ते उत्तरमददुः। अथ कदाचित् तीर्थयात्राप्रसङ्गेन साक्षादिदमेव स्थलमागतो विद्यारसिकमूर्धन्यः श्रीरामकृष्णतेलाङ् महाशयः, सम्भाषणावसरे पूनानगरस्थ 'आनन्दाश्रम' मुद्रितसङ्गीतरत्नाकरसम्पादकत्वेन ज्ञातः इमं विषयं विज्ञापितः सन् स्वस्थानं गत्वा विचिन्त्य निवेदयामीति प्रतिज्ञाय,सद्यं तथैव चकार। तावन्तं परिश्रममङ्गीकृतवति तस्मिन् संस्कृतप्रिये सहृदयसार्वभौमे सर्वसौहार्दयोग्ये विचक्षणे महतीं कृतज्ञतां बिभ्राणानामप्यस्माकं तेनोक्ते प्रकृतश्लोकार्थे न तृप्तिरासीत्। ततः कियन्तं चन कालं उद्यानपत्रिकानुबन्धतया काव्यालङ्कारग्रन्थप्रकाशनस्य विच्छेदः कर्तव्योऽभवत्। अगत्या तथा कृत्वा पूर्वमसकृदवलोक्य निराशानिक्षिप्तमपि सङ्गीतरत्नाकरं पुनरादाय आदितः प्रभृति सावधानमवालोकयाम। गच्छत्सु दिनेषु क्रमेण तत्र प्रवेशोऽलभ्यत। ततः परं अयं श्लोकः स्वार्थं प्राकाशयत्। तथा प्राकाशयत् यथा न परं हृदयस्य परिपूर्णा तृप्तिरभवत् ; किं तु अयमेवार्थो नान्य इति अकम्पनीयं प्रतिज्ञाधार्ष्ट्यमप्यजनि। इममर्थं ज्ञापितः श्रीरामकृष्णतेलाङ् महाशयः भरतनाट्यशास्त्रमपि समालोच्यतामित्युपादिशत्। आपाततोऽस्य सङ्गीतरत्नाकरस्य चास्मिन्विषये ऐकमत्यस्याप्रतीतावपि वस्तुतो नानाभिप्रायभेद इत्यस्माकमभात्। तद्वयं पुनस्तस्मै न्यवेदयाम।

इतोऽपि महत्तरं विषयान्तरं किञ्चिदस्ति। यस्मिन् दिने एत-द्व्याख्यानकरणबुद्धिरस्माकमजायत तस्मात् दिनात् प्रभृति आवसानं प्रत्यहं काव्यालङ्कारपारायणं कुर्वन्त आस्म। अह्नि तदर्थमवकाशालाभे शयने शयित्वाऽपि एकमपि वा परिच्छेदं पठित्वैव सुप्ता अभवाम। एवं पुनः पुनरावृत्तिकरणानन्तरमेव न्यायव्याकरणविषयाव-न्तिमौ द्वौ परिच्छेदौ ज्ञातार्थौ समपद्येताम्। तृतीयपरिच्छेदे 'गाम्भीर्यलाघवतोः' (५०) इति स्थिते 'गाम्भीर्यलावण्यवतोः' इति, 'निशाकृतं प्रकृत्यैव (५१) इत्यत्र 'निशाकृतः प्रकृत्यैव' इति, चतुर्थे 'इष्टं निश्चितये वाक्यं न वेलायेति (१८)" इत्यत्र '... ... न दोलायेत' इति 'न चाभिमानेन किमु प्रतीयते(५१)' इत्यत्र 'किमु प्रतीतये' इति, पञ्चमे 'तत एवेति न्यायतः (१०)' इत्यत्र 'नान्यतः' इति, एवं बहुषु स्थलान्तरेषु च तत्तदौचित्येन शुद्धपाठोपलम्भनं प्रथमावलोकन एव यथा सुकरमासीत् न तथा षष्ठे—

शिशिरासारकणिकां सदृशस्ते तु गांगवत्। (६-४५)

अभ्यस्तेषु प्रयोक्तव्यमदन्तं च विदेः शतुः। (६-५९)

सावर्ण्यवत् सयोभस्य ब्रूयान्नान्यत्र पद्धतेः। (६-६१)

इत्येवं दृष्टेष्वशुद्धपाठेषु तत्सुकरमासीत्।

... ... ... ...रं योगिनं वदेत्।

यथैतच्छ्यामभाभाति त्वनं वनजलोचने॥ (६-६०)

इत्यत्र च गलितग्रन्थपूरणमपि कर्तव्यमापतत्। सर्वमेतद्यथाबुद्धिविभवं परिश्रम्य समञ्जसं कृत्वा व्याख्यातवन्तः स्मः। तत्र सर्वत्र सदसद्भावे सहृदयाः प्रमाणम्। इदं त्विहास्माकं विशेषतो वक्तव्यम्। षष्ठे परिच्छेदे काव्योपयोगार्हान् व्याकरणसंस्कारवतः शब्दविशेषान् बहून् भामहः प्रदर्शयति। तत्र पौर्वापर्यनियामकं किंचिदस्ति न वेति जातगाढजिज्ञासा वयं चिरं चिन्तामकुर्म। प्रथमं मार्जन्तीति तिङन्तमाह। अथ सरूपशेषम्। अथ णिचम्। अथाव्ययीभावमित्यादि पश्यतां सर्वथा नास्त्यत्र कश्चित् क्रम इत्येव

मन्तव्यमासीत् । किन्तु शास्त्रीया प्रौढं ग्रन्थं लेखितुं प्रवृत्तः काव्यलक्षणकारोऽयं भामहः यत्किमपि नियामकमकृत्वा यथोपस्थितं तं तं शब्दमाहेति अध्यवसातुं न हृदयमन्वमन्यत । अथापि किं कर्तुं शक्यम् । निराशा एव सन्तः षष्ठस्य परिच्छेदस्य वृत्तिं लेखितुमारभामहि । त्रिंशच्छ्लोका व्याख्याता अभूवन् । ततः परमेव क्रमनियामकापेक्षा । निराशाविरलमनस एव लेखन्या मषीमादाय अवधूय वृत्तिलेखनाय एकत्रिंशं श्लोकमपठाम—

वृद्धिपक्षं प्रयुञ्जीत ... ...(६ ३१)

इत्येवमादिम् । तदात्वे झटिति किंचिदभात्—वृद्धिशब्दमिह भामहः प्रयुंक्ते । 'वृद्धिरादै'जिति पाणिनिसूत्रेऽपि स शब्द आदौ श्रूयते । तेनायं ग्रन्थकारः कदाचिदष्टाध्यायीक्रममेव नियामकमाश्रितवान् भवेत्—इति । अष्टाध्यायीमादायाद्राक्ष्म । अहो वतानन्दस्य काष्ठा । तथा तदासीत् । व्याख्यानपरिश्रमः सर्वः अनेनानन्देन सफलीकृतः । गुरून् सर्वानस्मराम । भगवन्तमवन्दामहि । श्लोकं च कञ्चिदलिखाम तच्छ्लोकव्याख्यानस्यान्ते 'मत्तः स्मृतिर्ज्ञानमपोहनं चे'त्यादिम् । सोऽयं आहित आरम्भान्विष्टोऽर्थः पञ्चसु पूर्णेषु वर्षेष्वतीतेषु षष्ठे वर्षे उपलब्ध आसीत् । उपलम्भात् प्राक् अधिकतरचिन्ताप्रदः तदनन्तरं अधिकतरानन्दावहश्च न कश्चिदन्यो विषय इहास्माकमासीत् ।

स एषोऽस्माकं व्याख्यानकाले जातोऽनुभवः । तस्यात्र प्रकाशने किं श्रोतॄणां प्रयोजनम् ? तन्न जानीमः । अस्माकं तु हृदयमिदानीमपनीतभारमिव लघुभूतं चिन्तान्तरं कर्तुं क्षमते । तत्क्रियते ।

---

अयं भामहीयः काव्यालङ्कारः षट्परिच्छेदात्मा । एवमादीनां ग्रन्थानां परिच्छेदरूपेण विभागः किं भामहकालात् प्राक्तनः अथ वा अयमेव तस्य प्रवर्तक इति विचारणीयम् । इदानीं तु तत्र निर्णयं कर्तुं न सामग्र्यस्ति । एषु षट्सु परिच्छेदेषु आद्ये काव्यस्य

शरीरं द्वितीयतृतीययोः अलङ्कारान्, चतुर्थे दोषान्, पंचमे न्यायविषयं, अन्तिमे शब्दशुद्धिं च प्रतिपादयति । तदिदं अन्ते श्लोकद्वयेन स्वयमेव भामहः कथयति । अत्र सर्वत्र प्राचीनैरेव निरूपितांशः कियान्, भामहेन स्वयमवधार्य निरूपितांशः कियानिति विभज्य दर्शनं विमर्शनमार्गगामिनामाकूलादाय कल्पेत ।

'बहुविधकृतीर्दृष्ट्वाऽन्येषां स्वयं परितर्क्य च' (५ ६९)

इति,

'अवलोक्य मतानि सत्कवीनामवगम्य स्वधिया च काव्यलक्ष्म' ६ ६४

इति च द्विः इतरग्रन्थदार्शित्वमात्मनः प्रकाशयन् भामहः अनेके अलङ्कारग्रन्थकाराः स्वस्मात् पूर्वमासन्निति स्पष्टमेव बोधयति । तत्र मेधाविनं नाम्ना द्विर्निर्दिशति । द्वितीयपरिच्छेदे 'सूर्यांशुसम्मीलितलोचनेषु' 'निष्पेतुरास्यादिव तस्य दीप्ताः' इति श्लोकद्वयं 'राजमित्रे यथोदितम्' इत्युपक्रम्य पठनात् राजमित्रनाम्नि काव्ये स्थितमिति ज्ञायते * । द्वितीयश्लोकान्ते 'शाखावर्धनस्य' इति कवेर्नामापि कथितं दृश्यते । एवं 'स पीतवासाः प्रगृहीतशार्ङ्गः' इति श्लोकस्यान्ते 'रामशर्मणः' इति कविर्निर्दिष्टनामा † ।

इत्थं यथेमौ शाखावर्धनरामशर्माणौ काव्यविशेषकृतौ कवी इति प्रतीयेते न तथा मेधावी । किन्तु, 'इत्येवमुपमादोषाः सप्त मेधाविनोदिताः' 'संख्यानमिति मेधावी' इत्यादिपर्यालोचनया अलङ्कारग्रन्थविशेषस्यायं कर्तेति प्रतीयते । रुद्रटालंकारव्याख्याता नमिसाधुश्च 'दण्डिमेधाविरुद्रभामहादिकृतानि सन्त्येवालंकारशास्त्राणि' इति लिखन् उक्तेऽर्थे संवादी भवति । मेधाविरुद्र इति ना-

---

* 'समाहितं राजमित्रे' इति समाहितालङ्कारश्लोकपर्यालोचनायां शाखावर्धनीयमिदं राजमित्रकाव्यं परशुरामकथाप्रतिपादकं भवेदिति प्रतिभाति ।

† 'प्रहेलिका सा ह्युदिता रामशर्माच्युतोत्तरे' इत्यत्र रामशर्मकृतत्वेन निर्दिष्टे अच्युतोत्तरे वा अस्य श्लोकस्य स्थितिः अथ वा तदीये कृत्यन्तर इति न निश्चेतुं शक्यते ।

न्नि स्थिते भामहेन 'मेधावी'त्येकदेशाभिधानं कृतं भवेत् । अस्य मेधाविनोऽलंकारग्रन्थो नूनमपुनर्लाभाय लुप्तः । एवं 'बहुविधकृतीर्दृष्ट्वाऽन्येषाम्' इत्यनाभिसंहितेषु बहुष्वालंकारिकेषु एको मेधावी उपात्तनामा । ग्रन्थस्तु तस्य अत्यन्तमलुप्यत । अन्येषां तु न परं ग्रन्थास्तथाऽलुप्यन्त किन्तु नामापि न ज्ञायते । तदिह भरतनाट्यशास्त्रमेकं भामहात् प्राचीनं विमर्शनीयं भवति ।

---

वागभिनयनिरूपणे प्रवृत्तो भरतमुनिः सप्तदशेऽध्याये काव्यबन्धोपयुक्तानंशान् प्रतिपादयति । ते च लक्षणानि, अलङ्काराः, गुणाः, दोषा इति चतुर्विधाः । एषु अलङ्कारा गुणा दोषाश्चास्माकं सुविदिताः । लक्षणानि पुनर्नार्वाचीनेनालङ्कारिकेण केनचित् प्रतिपाद्यन्ते विना जयदेवमेकं यः स्वकीये चन्द्रालोकेऽलङ्कारनिरूपणात्पूर्वं लक्षणानि लक्षयति । एवमेतल्लक्षणविषये अत्यन्तमुपेक्षां कृतवतामालङ्कारिकाणां क आशय इति युक्तं विचारयितुम् । किन्तु ततः पूर्वं, लक्षणत्वेन किमभिप्रेतं भरतस्येत्यवगन्तव्यम् । गुणेभ्योऽलङ्कारेभ्यश्च को भेदो लक्षणानाम् । सूक्ष्मे विमर्शे न कश्चिदित्येव वक्तव्यं भवति । लक्षणेष्वाद्यं भूषणं नाम गुणालङ्कारात्मकमेव भरतः प्रतिपादयति—

'अलङ्कारैर्गुणैश्चैव बहुभिः समलंकृतम् ।
भूषणैरिव चित्रार्थैस्तद्भूषणमिति स्मृतम् ॥'

इति । एवं लक्षणेष्वन्यतमत्वेन गुणालंकारजातं भूषणाख्याविशिष्टमभिधाय पुनरन्ते

* 'एतानि वै काव्यविभूषणानि
षट्त्रिंशदुद्देश्यनिदर्शनानि ? ।'

इति सर्वेष्वेव लक्षणेषु भूषणव्यवहारं करोति । भूषणालङ्कारशब्दौ पर्यायाविति न कश्चिन्न जानीते । तेन दण्ड्युक्तरीत्या काव्यशोभाकरत्वेन सर्वत्रालङ्कारत्वं स्थितमित्येव भरतस्यापि हृदयमिति प्रतीमः ।

---

* पाठान्तरे—षट्त्रिंशदेतानि हि लक्षणानि प्रोक्तानि वै भूषणसम्मितानि । इति

अथापि यदयं पार्थक्यं कृत्वा निरूपयति तत्र तदानींतनव्यवहारव्यवस्था नियामिकेति भाति। लक्ष्यपरिशीलने प्रवृत्तानां प्राचां बुद्धौ वाचां शोभाकारित्वेन प्रथमप्रतीता उपमा। इयं द्विधा—यथेवादिशब्दवती तद्रहिता च। तत्राद्याया उपमेत्येव व्यवहारे स्थिते अन्त्यायाः पश्चाद्रूपकमिति व्यवहारः प्रावर्तत। पूर्वं तु साऽप्युपमेत्येव प्रख्याता बभूव। अत एव यास्क इमां लुप्तोपमेत्येवाभिदधाति। इवादीनामप्रयोगे यथा कोऽपि शोभातिशयः तथा बहुवाक्यान्वययोग्यस्य पदस्य प्रतिवाक्यमावृत्तिमन्तरा सकृत्प्रयोगे अस्ति काऽपि शोभेति प्रतिभाने सति दीपकालंकारप्रादुर्भावः। प्रसिद्धश्च वैदिकप्रस्थान एव पूर्वत्र श्रुतस्य उत्तरत्र वा, एतद्वैपरीत्येन वा, पदानामनुषङ्गः। सकृत्पाठेनैव बहुत्र प्रतीतिजननं हि प्रयोक्तुः कौशलमभिव्यञ्जयति। तेनात्रास्ति चमत्कारः। एवमसकृत् प्रयोज्यस्य पदस्य सकृत्प्रयोगरूपेऽलंकारे सिद्धे ततः परं शब्दाभ्यासरूपयमकप्रवृत्तिः। ऋक्संहितायामप्यस्ति शब्दालङ्कारः। एते चत्वारः वाचामलङ्कारत्वेन भरतात्पूर्वं प्रसिद्धाः। तां प्रसिद्धिमनुरुन्धान एवायमाह—

'उपमा रूपकं चैव दीपकं यमकं तथा।
अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः॥' इति।

मन्त्रब्राह्मणरूपाणां वैदिकग्रन्थानां स्वरूपं विविच्य निरूपयितुं प्रवर्तमाना ऋषयः बहुविधं तद्विभजन्ति। यास्कस्तावत् ऋङ्मन्त्रविषये एवमाह—

अथापि स्तुतिरेव भवति नाशीर्वादः। इन्द्रस्य नु वीर्याणि प्रवोचमिति यथैतस्मिन् सूक्ते। अथाप्याशीरेव न स्तुतिः। सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमिति। तदेतद्बहुलमाध्वर्यवे याज्ञेषु च मन्त्रेषु। अथापि शपथाभिशापौ। अद्या मुरीय यदि यातुधानो अस्मि, अधा स वीरैर्दशभिर्वि यूया इति। अथापि कस्यचिद्भावस्याचिख्यासा। न मृत्युरासीदमृतं न तर्हि, तम आसीत्तमसा गूळ्हमग्रे। अथापि परिदेवना कस्माचि-

ऽभावात्। सुदेवो अद्य प्रपतेदनावृत् । न विजानामि यदि वेदमस्मीति । अथापि निन्दाप्रशंसे । केवलाघो भवति केवलादी । भोजस्येदं पुष्करिणीव वेश्मेत्येवमक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा च। एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति। (VII. १.३)

शबरस्वामी स्वकीये जैमिनीयपूर्वमीमांसासूत्रभाष्ये कांश्चित् मन्त्रब्राह्मणरूपभेदान् प्राचीनवृत्तिकारोक्ततया प्रतिपादयति—

आयुर्दा असीत्याशीः। अग्निर्मूर्धा इति स्तुतिः । संख्या, एको ममेति। प्रलपितम्, 'अक्षी ते इन्द्र पिङ्गले दुलेरिव'। परिदेवनम्, अम्बे अम्बिके इति। प्रैषः, अग्नीदग्नीन् इति। अन्वेषणम्, को ऽसि कतमोऽसीति। पृष्टं, पृच्छामि त्वा इति। आख्यानम्, इयं वेदिरिति । अनुषङ्गः, अच्छिद्रेण पवित्रेणेति। (II. १.३२)

वृत्तिकारस्तु शिष्यहितार्थं प्रपञ्चितवान्-इतिकरणबहुलम् । इत्याहोपनिबद्धं। आख्यायिकास्वरूपम्। हेतुः, शूर्पेण जुहोति तेन ह्यन्नं क्रियत इति । निर्वचनम्, तद्दध्नो दधित्वम् । निन्दा, उपवीता वा एतस्याग्नयः। प्रशंसा, वायुर्वै क्षेपिष्ठा देवतेति। संशयः, होतव्यं गार्हपत्ये न होतव्यमिति। विधिः, यजमानसम्मिता औदुम्बरी भवति। परकृतिः, माषानेव मह्यं पचतेति । पुराकल्पः, उल्मुकैर्ह स्म पूर्वे समाजग्मुरिति। व्यवधारणकल्पना, यावतोऽश्वान् प्रतिगृह्णीयादिति।

हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः।
परक्रिया पुराकल्पो व्यवधारणकल्पना॥
उपमानं दशैते तु * विधयो ब्राह्मणस्य तु।
एतद्वै सर्ववेदेषु नियतं † विधिलक्षणम्॥ (II. १.३३)

इति । इत्थं यथा वैदिकानां ग्रन्थानां तथा लौकिकानामपि बहुधा विभागः सम्भवी। श्रोतॄणामावर्जनाय हि वाचां गुम्फः प्रवर्तते। तेन उदात्ता गम्भीरा ऊर्जिता च शैली तत्रावलम्ब्यते । तथा सति व-

* 'विधाः' इत्यर्थः । † विधिरिह ब्राह्मणम्।

क्तृबोद्धविषयादिभेदेन तत्र वैविध्यमवश्यंभावि । ग्रन्थानां स्वरूपं परस्परं भिन्नं भवतीत्युक्तं भवति । एवं स्वरूपभेदहेतव एव नूनं वैदिकमार्गानुसारेण काव्यस्वरूपभेदान् अवदधता भरतेन लक्षणानीत्युच्यन्ते । एवमस्मिन् विषये वेदप्रस्थानोपजीवित्वमभिसन्धायैव 'जग्राह पाठ्यमृग्वेदात्' इत्युक्तमित्यपि युक्तं ग्रहीतुम् । हेतुः, संशयः निरुक्तं (निन्दा), पृच्छा, प्रियवचनं, आशीः, इति हीमानि वैदिकमार्गानुसरणमिह दृढं प्रत्यभिज्ञापयन्ति ।सामान्यलौकिकव्यवहारापेक्षया वाचां काव्यत्वापादकता यद्यपि उपमादिवत् सर्वेषां लक्षणानां समाना तथाऽपि पूर्वमेषामलङ्कारत्वप्रसिद्ध्यभावात् शब्दार्थव्यवहारे च उत्सर्गतः प्रौढैरपि स्वातन्त्र्यानवलम्बनात् उपमानादीनां चतुर्णामलङ्कारत्वं कृत्वा स्वरूपभेदनियामकानामेषां लक्षणसंज्ञां भरतो विदधे । एषामपि शोभाकारित्वं सम्पश्यंस्तु उपमादिषु प्रसिद्धमलङ्कारशब्दं विहाय यौगिकं विभूषणशब्दं उपाददानः

'एतानि वै काव्यविभूषणानि'

इत्याह । भरतादर्वाञ्चस्तु आलङ्कारिकाः तदुपज्ञेनैव सरण्या सञ्चरमाणा अपि तेनोक्तानां लक्षणानामलङ्कारेभ्यः पृथग्भावमनाकलयन्तः, वस्तुतत्त्वे एकरूपे सति निर्निबन्धनमाख्याभेदमनाद्रियमाणाः तेषां पृथङ्निरूपणं नैव चक्रुः । किन्तु भरतेनोक्तेषु षट्त्रिंशति लक्षणेषु येषां उपमादिवत् स्वस्वबुद्ध्या शोभाकरत्वमभात्, तानि उपमादिभिः सहालङ्कारतयैव परिगणयन्तः अलङ्कारसंख्यां अभ्यवर्धयन् ।

सिद्धैरर्थैः समं कृत्वा ह्यसिद्धोऽर्थः प्रयुज्यते ।
यत्र ... ... सा शोभेत्यभिधीयते ॥

इतीदं पश्यतां तुल्ययोगितालङ्कारबुद्धिर्भवति ।

निरवद्यस्य वाक्यस्य पूर्वोक्तानुप्रसिद्धये ।
यदुच्यते तु वचनं निरुक्तं तदुदाहृतम् ॥

इत्यनेनार्थान्तरन्यासस्य स्फूर्तिर्भवति ।

अपरिज्ञाततत्त्वार्थं वाक्यं यत्र समाप्यते ।
अनेकत्वाद्विचाराणां ससंशय इति स्मृतः ॥

इत्यस्मात् ससन्देहालङ्कारप्रतीतिरिति नास्त्यत्र सन्देहस्यावसरः।

यथादेशं यथाकालं यथारूपं च वर्ण्यते।
यत् प्रत्यक्षं परोक्षं वा दृष्टं तत् ... ... ॥

इति स्वभावोक्तिप्रभवः। एवं गुणातिपातगर्हणाभ्यां व्याजस्तुतेः, अर्थापत्तेः अप्रस्तुतप्रशंसायाः, प्रियोक्तेराशिषश्च सम्भवः। उदाहरणादर्शनाद्भरतोक्तानां लक्षणानां स्वरूपं इदंतया अस्माभिर्निष्कृष्य प्रदर्शयितुं न शक्यते। तथाऽपि तत्र बहूनि उपरि दर्शितदिशा पश्चात्तनालङ्कारबीजभूतानीत्यत्र नास्ति संशयः। केचित् पुनरेभ्यो लक्षणेभ्योऽलङ्कारान् कल्पयन्तः

यत्प्रयोजनसामर्थ्याद्वाक्यमिष्टार्थसाधकम्।
समासोक्तं मनोग्राहि स हेतुरिति संज्ञितः॥ १०॥

हृदयस्थस्य वाक्यस्य गूढार्थस्य विभावकम्।
अन्यापदेशैः कथनं मनोरथ इति स्मृतः॥ ३६॥

यद्वाक्यं वादकुशलैरुपायेनाभिधीयते।
सदृशार्थाविनिष्पन्नः स लेश इति कीर्तितः॥ ३७॥

इत्येतेभ्यस्त्रिभ्यः क्रमेण हेतुसूक्ष्मलेशालङ्कारानकल्पयन्। तान्निरस्यन् भामहः

हेतुश्च सूक्ष्मो लेशोऽथ नालङ्कारतया मतः। (२. ८६)

इत्याह। न परं भरतोक्तेभ्यो लक्षणेभ्यः, किं तु गुणालङ्कारेभ्योऽपि अलङ्कारान्तराणामुद्भव इति दृढं वक्तुं शक्यते।

"क्षरन्तो दानसलिलं लीलामन्थरगामिनः।
मतङ्गजा विराजन्ते जङ्गमा इव पर्वताः॥"

इति भरतोक्तं कल्पितोपमाया उदाहरणम्। अर्वाचीनानामियमुत्प्रेक्षा। उदात्तत्वगुणादुदात्तालङ्कारः। भरतेन नाटके रसप्राधान्यस्य बहुधाऽभिधानात् श्रव्यकाव्येष्वपि तस्य चमत्कारित्वं पश्यद्भिः रसवदलंकार उक्तः।

रामायणमहाभारतादिलक्ष्यपर्यालोचनया च बहवोऽलंकारा उपज्ञाता भवेयुः।

"वहन्ति वर्षन्ति नदन्ति भान्ति
ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः
प्रियावियुक्ताः शिखिनः प्लवङ्गाः ॥"
(रामायण-किष्किन्धा १८. २८)

इत्येतत्पठतां हि अस्तीह यथासंख्यत्वेन चमत्कार इति प्रतीयेत। तत्र यथासंख्यालंकारसिद्धिः सुलभा ।

एवमलंकारेष्विव भरतोक्तेषु गुणदोषेष्वपि अर्वाचीनैः स्वस्वबुद्ध्या विमर्शेन अन्यथाभावः कश्चन कल्पितः स्यात् । इत्थं भरतादारभ्य मेधावी अन्यो वा यः स्वस्माद्व्यवहितप्राचीनः तत्पर्यन्तैः सर्वैरालंकारिकैः स्वस्वग्रन्थेऽभिहितं सर्वमवलोक्य लक्ष्यपरिशीलनया स्वयं विचिन्त्य चायं काव्यालंकारग्रन्थो भामहेन कृतोऽभूदिति तस्यैवोक्त्या प्रतीमः ।

---

अलंकारशब्दश्रवणे अक्षरविद्वोष्ठ्यां नेदानीं काव्यालंकारेतरस्य कस्यचिदर्थस्य प्रतीतिर्भवति । राजानकरुय्यकादिकाले एवमेतदासीत् । अत एव अलंकारसर्वस्वमित्यादि केवलालंकारशब्दघटितं नाम क्रियते । भामहादिकाले पुनः नैवमलंकारशब्दस्य काव्यालङ्कारे अतिप्रसिद्धिः । नाट्यशास्त्रे षडलंकाराः प्रतिपाद्यन्ते । तथा हि— (1) सप्तदशाध्याये उपमादिः । (2) एकोनविंशे

उच्चो दीप्तश्च मंद्रश्च नीचो द्रुतविलम्बितौ ।
पाठ्यस्यैते ह्यलंकारा लक्षणं च निबोधत ॥

इति पाठ्यालंकारः । (3) त्रयोविंशे

नाट्यस्येह त्वलंकारो नेपथ्यं संप्रकीर्तितम् ।
चतुर्विधं तु नेपथ्यं पुस्तोऽलंकार एव च ।
अलङ्कारस्तु विज्ञेयो माल्याभरणवाससा ॥

इति नेपथ्यालंकारः । (4) चतुर्विंशे

अलङ्कारास्तु नाट्यज्ञैर्ज्ञेया नाट्यरसाश्रयाः ।

इति नाट्यालङ्कारः । (5) सप्तविंशे

यदा सर्वे समुदिता एकीभूता भवन्ति हि ।
अलङ्कारः स तु तदा मन्तव्यो नाट्ययोक्तृभिः ॥

इति प्रयोगालङ्कारः (6) एकोनत्रिंशे

अत ऊर्ध्वं प्रवक्ष्यामि वर्णालङ्कारलक्षणम् ।

इति वर्णालङ्कार इति । एवं बहुसाधारणत्वादलङ्कारशब्दस्य तन्मात्रेण विवक्षितार्थप्रतीतिर्न सेत्स्यतीति पश्यन् भामहः काव्यालङ्कार इति स्वग्रन्थस्य नामधेयं करोति । एवं नामकरणेनैव इदमपि प्रत्येतव्यं यदयं काव्यस्य काव्यत्वापादकः प्रधानांशः अलङ्कार एवेति मन्यत इति । न परं श्रव्यस्य, दृश्यस्यापि तु काव्यत्वमलङ्कारमहिम्नैवेत्यस्याभिप्रायः । यथा दृश्यस्य सन्धिपञ्चकवत्त्वं रसवत्त्वं च तथा श्रव्यस्यापीदम् । यदाह—

पञ्चभिः सन्धिभिर्युक्तं नातिव्याख्येयमृद्धिमत् ।
युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक्*। इति ।(I. 20-1)

अलङ्कारनिरूपणावसरे सन्ध्यादीनां गणनाभावेऽपि वाचां शोभाकारित्वात् तेषामलंङ्कारत्वमभिमतमेव । तदिदं सुस्पष्टमाह दण्डी—

यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे ।
व्यावर्णितमिदं चेष्टमलंकारतयैव नः ॥ (II. 366)

इति ।

[संधयः पञ्च । तदङ्गानि । वृत्तयश्चतस्रः । तदङ्गानि । लक्षणानि षट्त्रिंशत् । एतदादि आगमान्तरे भरतनाट्यशास्त्रे यद्व्यावर्णितं विभज्य विस्तरेण निरूपितं तत् सर्वमलङ्कारतयैवास्माकमिष्टमिति]

एवं काव्यत्वसम्पादके, रससन्ध्यादिकं सर्वं स्वात्मन्यन्तर्भावयति अलङ्काराख्येंशे दृश्यश्रव्योभयसाधारणे सति अभिनेयत्वानभिनेयत्वाभ्यामेवानयोः काव्यभेदयोरन्योन्यं वैलक्षण्यम् । काव्ये यः सारांशः तस्यैवालङ्कारव्यपदेशः । इतरस्य तु शरीरमिति ।

---

* My friend A. Sankaran M.A. Ph.D. writes in his thesis 'Some aspects of Literary criticism in Sanskrit' (P. 24). "The attitude of Bhamaha to the Rasa theory is distinctly that of an exponent of a rival school of criticism, and

तत्र भरतः

'इतिवृत्तन्तु काव्यस्य शरीरं परिकीर्तितम् ।' (XXI. 1)

इति केवलं वस्त्वेव शरीरमाह ।

षष्ठ्या शरीरं निर्णीतं ... ... (6. 65)

इति काव्यशरीरनिर्णयपरतया प्रतिपादितस्य काव्यालङ्कारप्रथमपरिच्छेदस्य पर्यालोचने तु शब्दमपि काव्यशरीरतया भामहोऽभिप्रैतीति प्रतीयते । अयमभिप्रायः 'शब्दार्थौ सहितौ काव्यम्' इति साग्रहमिव प्रतिजानानेनाविष्क्रियत इत्यपि शक्यं वक्तुम् । अत एव काव्यविभागावसरे शब्दानुरोधेनार्थानुरोधेन च बहुधा विभागं करोति । दण्डी पुनः शब्दस्यैव प्रथमप्रतीतेस्तस्यैव प्राधान्यमिच्छन् अर्थमुपसर्जनीकृत्य

'शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली । '

---

this is clear from the scanty treatment that he accords to it." And my friend Mr. K. S. Ramaswamy Sastri too says in his introduction to the Sringaraprakasa of Saradatanaya (of the Gaiekwards Oriental Series) [p. 20]:

"The attitude of Bhamaha towards the theory of rasa was not only unfavourable but distinctly hostile. He is an exponent of a rival school of literary criticism."

By passing such unauthorised remarks both of my friends do very great injustice to Bhamaha who is as fond of rasa as Dandin. But why is it that he has not cared to treat of rasas at any length at least as Dandin has done? He has given his answer to this question in his 'उक्तोऽन्यैस्तस्य विस्तरः' which is said in connection with the Dramas.

From the hemistich

युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक् ।

we clearly see that he lays stress upon rasas being present in sargabandhas also. Dr. Sankaran misunderstands this hemistich as having reference to dramas and writes-

> But he betrays (!) his knowledge of all the rasas when he says युक्तं लोक ... ... ... meaning that in the Drama all the rasas should be delineated.

Five slokas from 19 to 23 treat only of poetry, sarga-

इत्याह । काव्यस्य प्रयोजनं हेतुश्चेत्येतदभिधानपरमुपोद्घातं समाप्य स्वग्रन्थविषयं विविञ्चन् भामहः रूपकादिरर्थालङ्कारवर्ग एव कैश्चिदुक्त इति, अस्य बाहिरङ्गत्वमाचक्षाणैरन्यैस्तुपां तिङां च व्युत्पत्तिरेवालङ्कारत्वेनाङ्गीकृतेति चाभिधाय सौशब्ध्यमेतदुच्यते नार्थालङ्कार ईदृश इति तन्निरस्यति

रूपकादिमलंकारं बाह्यमाचक्षते परे।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥(1. 14)
तदेतदाहुः सौशब्ध्यं नार्थव्युत्पत्तिरीदृशी' (1.15) इति ।

---

bandha. There is no reference here to Drama which is taken up only in the 24th sloka.

I should like to remove one more misunderstanding of my friend Dr. A. Sankaran. He writes in his thesis [p. 26]

> "being a poet he is probably overpowered by feeling for this element in poetry and is forced to recognize it to be quite as appealing as the Gunas. For he speaks thus in Kavyadarsa II. 292. "It has been shown that, of composition which is the acme of refinement, Madhurya or sweetness is the essence. Here it is stated that the life of poetic language is the delineation of rasas."

But the truth is this:—

Prof. Rangacharya's edition of the Kavyadarsa misreads the first half of the sloka referred to here—

'वाक्यस्याग्राम्यतायोनेर्माधुर्यं दर्शितो रसः ।'

whereas it must be वाक्यस्याग्राम्यतायोनिर्माधुर्ये दर्शितो रसः। One of the ten gunas that were treated in the first Paricheda is Madhurya and it has deen defined as मधुरं रसवत् । Now among the alankaras we have another rasavat. What is the difference between the two? This, Dandin explains in this sloka. The meaning of the sloka is this: When treating of Madhurya we have shown a rasa which is derived from अग्राम्यता. But here we speak of poetry as having a rasa on account of the presense of eight rasas (of Bharata).

'कः पुनरयं पाक इत्याचार्याः । परिणाम इति मङ्गलः । कः पुनरयं परिणाम इत्याचार्याः । सुपां तिङां च श्रवः(प्रि)या व्युत्पत्तिरिति मङ्गलः । सौशब्द्यमेतत् । पदनिवेशनिष्कम्पता पाक इत्याचार्याः ।"

इति राजशखरेण काव्यमीमांसायामुक्तं पश्यतां मङ्गलनाम्ना केनचित् प्राचीनेन काव्यलक्षणकारेणाभिहितमेवात्र भामहोऽनूद्य निराकरोतीति प्रतिभानं भवेत् । किन्तु काव्यमीमांसाकाव्यानुशासनादिग्रन्थस्थतदभिप्रायानुवादपर्यालोचनायां स भामहात् सर्वथाऽर्वाचीन इत्येव भाति । भामहात् प्राचीनैः कैश्चित् सुप्तिङ्व्युत्पत्तेरलङ्कारत्वमभ्यधीयत । भामहोक्तरीत्या तस्या अनलङ्कारत्वेऽपि पाकविशेषरूपत्वं युक्तमिति मङ्गल इत्यभिप्रायभेदोपपत्तेर्नेदं मङ्गलस्य भामहादपि पूर्वत्वे लिङ्गमिति सुवचम् । सदुक्तिकर्णामृते मङ्गलकृतत्वेनोदाहृते

'यदाख्यानासङ्गादुषसि पुनते वाचमृषयो
यदीयः सङ्कल्पो हृदि सुकृतिनामेव रमते ।
स सार्वः सर्वज्ञः पथि निरपवादे कृतपदो
जिनो जन्तूनुच्चैर्दमयतु भवावर्तपतितान् ॥'

इति पद्ये 'सार्वः सर्वज्ञः' इतीदं 'प्रणम्य सार्वं सर्वज्ञं' इति भामहोक्तिमनुसृत्य प्रयुक्तमित्यपि शक्यं वक्तुम् । किरातार्जुनीयव्याख्यानेष्वेकं मङ्गल इति *मङ्गलकविरिति चाभिहितेन केनचिद्विरचितं मद्रराजधानीलिखितपुस्तकालये दृश्यते । भारविः त्रयोदशे सर्गे

'स्तुवन्ति गुर्वीमभिधेयसम्पदं विशुद्धिमुक्तेरपरे विपश्चितः ।'

---

* Speaking of Mangala, P. V. Kane writes in his introduction to the Sahitya Darpana (p. 12):

सोमेश्वर in his commentary on the काव्यप्रकाश quotes from भरत a passage about *ojas* (which is not found in नाट्यशास्त्र) and the explanation of मङ्गल thereon 'तत्रावगीतस्य हीनस्य वा वस्तुनः शब्दार्थसम्पदा यदुदात्तत्वं निषिञ्चन्ति कवयः तदोज इति भरतः । अवगीतस्य हीनस्य वा वस्तुनः शब्दार्थयोः सम्पदा पदमुदात्तत्वं ? निषिञ्चन्ति कवयः तर्हि तदनोजः स्यादिति मङ्गलः' । The काव्यप्रकाशसङ्केत

of माणिक्यचन्द्र also quotes the views of मङ्गल–दण्ड्यक्तं समासदैर्घ्यमोज इत्यपि न । रीतित्रयेऽप्योजसः साधारणत्वाद्गौडीयानिर्देशो न युक्तिमानिति वामनमङ्गलौ (p. 292 Mysore Edn.). हेमचन्द्र (विवेक p. 195,) quotes the same two passages from मङ्गल । The काव्यमी of राजशेखर quotes मङ्गल as a writer on poetics (pp. 11, 14, 16, 20.). Therefore it is not unlikely that Mangala wrote a comment on the Natya Sastra.

It must be pointed out here that though the passage treating of ojas, meant by Mangala, is not found in the previous edition of the Natya Sastra, it is found in its new edition (1929) of Chowkhamba (p. 212.) We read there:

'अवगीताविहीनोऽपि स्यादुदात्तावभावकः ।
यत्र शब्दार्थसम्पतिस्तदोजःपरिकीर्तितम् ॥

'अवगीतावि......' may be either अवगीतवि... or अवगीतो वि......

P. V. Kane only exhibits his want of व्युत्पत्ति when he says 'the explanation of मङ्गल thereon' etc., for मङ्गल refutes and does not explain Bharata's definition of ojas. The text quoted from मङ्गल needs correction as 'अनवगीतस्य अहीनस्य वा..........यदनुदात्तत्वं.... ... ... .... इति मङ्गलः' and exactly thus we read the line in the अलङ्कारचूडामणि of Hemachandra, and also in माणिक्यचन्द्र's commentary on काव्यप्रकाश we read 'अहीनानवगीतस्यापकर्षणेन ओजसोऽपि गुणस्य प्राप्तेः । If this is borne in mind it may be seen that P. V. Kane's conjecture about मङ्गल having written a commentary on the Natya Sastra is quite baseless.

In "... रीतित्रयेऽप्योजसः साधारणत्वात् गौडीयानिर्देशो न युक्तिमानिति वामनमङ्गलौ" I am not sure who is meant by वामन. The author of the Kavyalankarasutra does not accept as we all know the ojas as common to all the three ritis. Or there must be some misreading.

3

इति अर्थालंकारशब्दशुद्धयोर्मतभेदेनाद्रियमाणत्वमभिदधत् स्वस्मात्प्राचीनैव तादृशमतभेदप्रवृत्तिरिति दर्शयति । एतेन, एतद्व्याख्याता स आलंकारिकमङ्गल एव यदि भवेत् तर्हि तदीयात्कालाच्चिरात् पूर्वमेव स मतभेद आसीदिति स्पष्टमेव प्रतीयते । परं तु आलङ्कारिककिरातव्याख्याकृतोर्मङ्गलयोर्नामधेयव्यतिरिक्तेन प्रमाणेन ऐक्यं यावत् स्थिरीक्रियेत तावदत्र साशङ्कतैव हृदयस्य भवेत् ।

---

'सर्गबन्धोऽभिनेयार्थ' मिति प्रथमनिर्देशेन, 'उक्तोऽन्यैस्तस्य विस्तरः' इति दृश्यलक्षणोपेक्षणेन, लक्षणपरे श्लोकद्वयेऽभिव्यञ्जितेन संरम्भातिशयेन, 'महतां च महच्च यत्' इति साक्षादभिधानेन च सर्गबन्धात्मनि महाकाव्ये भामहस्य आदरातिशय इति वक्तव्यं भवति । दण्डी चात्र एकाभिप्रायो भाति । तदिदं प्रति वक्तुमिवेच्छन् वामनः 'काव्येषु दशरूपकं श्रेयः' इति ब्रवीति ।

सर्गबन्धलक्षणानुपदमेव

नायकं प्रागुपन्यस्य वंशवीर्यश्रुतादिभिः ।
न तस्यैव वधं ब्रूयादन्योत्कर्षाभिधित्सया ॥ (1. 22)

यदि काव्यशरीरस्य न स व्यापितयेष्यते ।
न चाभ्युदयभाक्तस्य मुधादौ ग्रहणं स्तवे ॥(1. 23)

इति भामहः स्तुतस्य वधवर्णनमयुक्तम् । वध्यस्य स्तुतिकरणमयुक्तमिति कवीन् शिक्षयति ।

काव्यादर्शे तु काव्यालङ्कारवदेव सर्गबन्धलक्षणानन्तरं

'वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि ।
तज्जयान्नायकोत्कर्षवर्णनं च धिनोति नः ॥'

इत्याह दण्डी । उदाहृताभ्यां भामहश्लोकाभ्यां सह इमं दण्डिनः श्लोकं पर्यालोचयन्तो व्युत्पन्नमतयः, 'वंशवीर्यश्रुतादिभिः' इति भामहप्रयुक्तं शब्दमेव साक्षात्प्रयुञ्जानो दण्डी रिपोः प्रतिनायकस्य स्तुतिं कृत्वा वधवर्णनं नायकोत्कर्षपर्यवसायित्वात् कामं युक्तमिति स्वाभिप्रायं भामहोक्तिं मनसि कृत्वा तदाक्षेपाभिप्रायेणैव प्रकाशयतीति नैव न गृह्णीयुः ।

---

एवं कथाऽऽख्यायिकयोर्भेदमपि भामहोक्तं दण्डी निरस्यति । आख्यायिकाविषये षड्विशेषाः भामहेनोक्ताः— (1) संस्कृतभाषामयी । (2) नायकवक्तृका । (3) सोच्छ्वासा । (4) वक्त्रापरवक्त्रयुक्ता । (5) कविभावकृतचिह्ना । (6) कन्याहरणाद्यन्विता । इति । कथाविषये च (1) संस्कृतप्राकृतापभ्रंशमयी (2) उच्छ्वासरहिता (3) नायकेतरवक्तृका (4) वक्त्रापरवक्त्ररहिता । इति चत्वारो विशेषाः । अत्र आख्यायिकाविशेषषट्केऽन्यद्वयस्याप्रतिषेधात् 'अप्रतिषिद्धमनुमतं भवति' इति तन्त्रयुक्त्या तत्कथायामपीष्टमिति सिद्ध्यति * ।

तेन तत् द्वयं कथाख्यायिकोभयसाधारणमिति भामहाभिप्रायः प्रतीयते। एवं च तस्मिन् षट्के आद्याश्चत्वारोंऽशाः कथापेक्षया आख्यायिकाया भेदहेतवः, अन्त्यौ तु द्वौ कथाख्यायिकयोरुभयोः काव्यप्रभेदान्तरापेक्षया भेदहेतू इति फलति । अत्र सर्वत्र दूषणमाह दण्डी । भामहेन पूर्वमेव 'संस्कृतं प्राकृतं चैतदपभ्रंश इति त्रिधा' इति भाषाविभागस्य दर्शितत्वात् तस्यात्र प्रथममेव संस्कृतनियमानियमकृतकथाऽऽख्यायिकावैलक्षण्यप्रदर्शनं सुकरमासीत् । दण्डिना तु

'तदेतद्वाङ्मयं भूयः संस्कृतं प्राकृतं तथा ।' (1. 32)

इत्युपरिष्टादेव भाषाभेदस्य दर्शयिष्यमाणत्वात् अत्र तत्कृतवैलक्षण्यनिरसनस्य नातीव औचित्यम् । तेन सः

'कथा हि सर्वभाषाभिः संस्कृतेन च बध्यते ।' (1. 38)

इति तत्रैव कथापरपर्यायाया आख्यायिकाया अपि संस्कृतनियमाभावं सूचयिष्यन् अत्रोदास्त । द्वितीयं तु आख्यायिकाया विशेषं

'अपित्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्'

इत्यनेन निरस्यति । भामहो हि

* P. V. Kane is quite mistaken when he says:- As भामह is silent about the points 4 and 5 (here 5 and 6) in describing कथा, he means that they are to be absent in a कथा.

(Introduction to the साहित्यदर्पण p. XXIX.)

वृत्तमाख्यायते तस्यां नायकेन स्वचेष्टितम् । (1. 26)

इति वदन् 'असति बाधके सर्वं वाक्यं सावधारणम्' इति न्यायेन नायकवक्तृकत्वनियममाख्यायिकाः प्रत्याययति । तस्मादयं नियमोऽत्र नास्तीति दण्डिनो दूषणमिह सम्यग्लगतीति अत्र दण्डिना दूषितोंशो न भामहाभिप्रेत इति कैश्चिदुक्तमयुक्तं वेदितव्यम् *। यद्युच्येत भामहेन कथायां

अन्यैः स्वचरितं तस्यां नायकेन तु नोच्यते । (1. 29)

इति अन्यनियम उच्यते । दण्डिना तु

'अन्या नायकेनेतरेण वा'

इत्यनियम इति विसंवादात् नात्र दण्डी भामहोक्तानुवादीति ; अस्मिन्नंशे परं काममेवमस्तु । आख्यायिकायां वक्तृनियमदूषणं तु दण्डिना क्रियमाणं तन्नियमवादिनि भामहे लगत्येव । वस्तुतस्तु

अन्यैः स्वचरितं तस्यां नायकेन तु वोच्यते ।

इति भामहग्रन्थपाठो भूतपूर्वो दण्डिना दृष्ट इति युक्तं ग्रहीतुम् । 'नायकेनेतरेण वा' इत्यस्मादेव दण्डिनो वचनात् । तृतीयचतुर्थौ विशेषौ 'वक्त्रं चापरवक्त्रं च' इत्यादिना श्लोकद्वयेन निराक्रियेते । अन्त्ययोर्द्वयोर्दूषणं

कन्याहरणसंग्रामविप्रलम्भोदयादयः ।
सर्गबन्धसमा एव नैते वैशेषिका गुणाः ॥
कविभावकृतं चिह्नमन्यत्रापि न दुष्यति ।'

इति । ‡ अन्यत्रापि सर्गबन्धेऽपीत्यर्थः । 'कन्याहरणसंग्रामविप्रलम्भोदयान्विता' इति 'कवेरभिप्रायकृतैरङ्कैः कैश्चिदङ्किता' इति च भामहोक्तिं पश्यतां शब्दतोऽपि तामनुवदन् दण्डी इह भामहमतं निरस्यतीति असन्दिग्धं प्रतीयते । न हीमां भामहोक्तिं दण्ड्युक्ति

---

* '... ... one point of attack (about the narrator) in the Kavyadarsa is not the opinion held by भामह.

P. V. Kane XXIX.

‡ So, P. V. Kane's rendering of this '... ... would not be a blemish in a कथा' is apparently wrong.

च सह पश्यतो यस्य कस्यचिदपि पण्डितस्य दण्ड्युक्तं भामहो निराकरोतीति वक्तुं प्रवृत्तिर्भवेत् । 'नैते वैशेषिका गुणाः' इति 'अन्यत्रापि न दुष्यति' इति च निरसनं हि दण्डिना कृतं दृश्यते । निरस्यमानं वैशेषिकगुणत्वं च भामहेनोक्तमुपलभामहे, न निरसनानुपपत्तिप्रदर्शनम् । अथ यद्युभावपि ग्रन्थान्तरोक्तं दृष्ट्वा एवं-व्रतः, न त्वनयोरेकोऽन्यदीयग्रन्थदर्शी ; तर्हि भूयिष्ठः शब्दसंवादः कथम् । न हि यदृच्छया उक्तवक्ष्यमाणस्थलेषु इयान् शब्दसंवादः कथमपि क्वचिदपि सम्भावनामर्हति । यदि तु दण्डिदूषितग्रन्थान्तरस्थं सर्वं भामहस्तथैव शब्दतोऽप्यनुवदति, तर्हि तस्य ग्रन्थकरणसामर्थ्यमतीव नाम श्लाघितव्यम् । तस्माद्भामहीयं काव्यालङ्कारं साक्षात् दृष्ट्वा तत्रोक्तमेव तत्र तत्र विशदयन् विस्तारयन् खण्डयंश्च दण्डी स्वं काव्यादर्शं चकारेति दृढसंस्कृतभाषाशैलीपरिचयशालिभिर्निश्चीयमाने व्याख्यातृभिस्तथाऽभिधीयमाने च यदद्य केचित् दण्डिभामहावज्ञातपरस्पराविति यद्वा दण्डी प्राचीनः भामहोऽर्वाचीन इति सिद्धान्तयन्ति ते सर्वथोपेक्षितव्याः । कालिदासोपजीव्यकाव्यान्तरव्याख्याता मल्लिनाथः, अस्मादनन्तरकालिकस्तु कालिदास इत्यभिधीयमानं यावद्विदुषामादरार्हम्, तावदेव एषां केषांचिदभिधानमिति मन्तव्यम् । वक्ष्यमाणेषु सर्वेषु स्थलेषु एवमेषामन्यथा ग्रहणं पण्डितैरवधातव्यम् ।

---

वैदर्भं गौडीयमिति प्रकारान्तरेण विभागं कैश्चित्प्राचीनैः कृतं भामहः साभिनिवेशं निराकरोति । इदममृष्यन् दण्डी महताऽभिनिवेशेन गौडवैदर्भमार्गौ विभज्य प्रदर्शयति । तत्र

'अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।
तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥'

इति वदन्, 'न परं द्वावेव मार्गौ अपि तु परस्सहस्रा मार्गाः परस्परविलक्षणाः सन्ति । किन्तु तेषां सूक्ष्मभेदत्वात् मा नाम भेदो ग्राहि । यौ पुनरतिस्फुटभेदौ गौडवैदर्भमार्गौ तयोर्वैलक्षण्यं ग्रहीतु-

मशक्नुवन्तो हन्त कथं काव्यलक्षणकृतो भवन्ती'ति नूनं 'गतानुगतिकन्यायान्नानाऽऽख्येयममेधसा'मिति वदन्तं भामहमुपहसति ।

इति मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात् ।
तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकवि स्थिताः ॥

इत्यन्तेऽपि एतमभिप्रायमाविष्करोति ।

---

एवं काव्यप्रभेदविषये वक्तव्यमुक्त्वा यत्र सुश्रवाणि सुप्रतीतार्थानि अनुचितार्थाप्रत्यायकानि च पदानि तस्यैव काव्यत्वमित्यभिप्रयन् वर्जनीयतया दोषान् कांश्चित् प्रदर्शयति ।

(1) गूढार्थम्, (2) अर्थान्तरम् , (3) अर्थहीनम्, (4) भिन्नार्थम् , (5) एकार्थम्, (6) अभिप्लुतार्थम् , (7) न्यायापेतम्, (8) विषमम् , (9) विसन्धि , (10) शब्दच्युतम्

इति दश काव्यदोषा भरतेनोक्ताः । अत्र प्रथमद्वयवर्जम्, इतरानष्टौ भामहश्चतुर्थपरिच्छेदे निरूपयति । एषामष्टानां मध्ये एकार्थविसन्धिनोस्तथैव तत्र व्यवहारः । इतरेषां पण्णां क्रमेण अपार्थम् , व्यर्थम् , यतिभ्रष्टम् , न्यायविरोधि, भिन्नवृत्तम्, शब्दहीनमिति ।

आद्यद्वये गूढार्थमिति यत् तदिह भामहेन गूढशब्दाभिधानमित्युक्तम् । भरतोक्तेषु दशसु गुणेषु , माधुर्यं प्रसादः ओजः इति त्रीन् विना इतरेषां बहूनां दोषाभावमात्ररूपत्वमभिसन्धाय तद्विपरीतरूपेण , नेयार्थं क्लिष्टं अवाचकमयुक्तिमत् इतीमान् दोषान् पठित्वा वर्जनीयानाह । भरतोक्तं अर्थान्तरं अत्रान्यार्थमिति पठितमिति भाति । भिन्नार्थमित्यस्य भरतेन द्वेधा लक्षणमुच्यते । तत्र एकं लक्षणमनुसृत्य विरुद्धार्थमित्यर्थो भवति । इदं व्यर्थमिति व्यवहृतं भामहेन चतुर्थपरिच्छेदे निरूप्यत इत्यवोचाम । लक्षणान्तरमनुसृत्य तु असभ्यग्राम्यार्थत्वं तदिति प्रतीयते । तदिदं किञ्चित् बहूकृत्य श्रुतिदुष्टमर्थदुष्टं कल्पनादुष्टं इतीमान् दोषान् भामहो दर्शयति ।

चेक्रीडितप्रभृतिभिर्विक्लृतैस्तु शब्दै-

युक्ता न भान्ति ललिता भरतप्रयोगाः ।
कृष्णाजिनाक्षरुरुचर्म (?) धरैर्घृताक्तै-
र्वेश्या द्विजैरिव कमण्डलुदण्डहस्तैः ॥

इति भरतोक्तिमनुसृत्य 'श्रुतिकष्ट' दोषप्रदर्शनम् । एवं भामहद-र्शितमनुसर्तुमनिच्छन्, गूढशब्दाभिधानादेः गौढवर्त्मनि प्रहेलि-कादौ चेष्टत्वात् तेषां सर्वदा दोषत्वेन निरूपणे औचित्यविरहं म-न्यमानश्च दण्डी अलङ्काररूपान् दोषाभावरूपांश्च दश गुणान् गु-णत्वेनैव निरूपयन् गौडवैदर्भमार्गभेदकतां तेषां दर्शयति ।

अत्रावाचकदोषं प्रदर्शयन् भामह आह—

हिमापहामित्रधरैर्व्याप्तं व्योमेत्यवाचकम् । (I. 41 )

इति । प्रहेलिकाप्रकरणे पारिहारिक्या उदाहरणतया दण्डी इमं श्लोकं पठति—

विजितात्मभवद्वेषिगुरुपादहतो जनः ।
हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥

इति । भामहाद् दण्डिनःप्राचीनतरत्वपक्षपातिनः स्वपक्षोपष्टम्भन-मिहातीव दृश्यत इति सोत्साहं लिखन्ति । वस्तुतत्त्वं त्वन्यादृशम् ।

भामहोक्तौ 'हिमापहामित्र...व्योमेत्यवाचकं' इति इतिकर-णात् हिमापहेत्यादि अन्यत्र स्थितमेव भामहेनानूद्यते । न स्ववाक्य-मित्येते मन्यन्ते ।* तत्कथमिति न विद्मः । 'रामो गच्छतीत्यहं ब्रवीमि' इति स्ववाक्यस्यापि हि इतिकरणेन ग्रहणं भवत्येव । प्रमाणान्तरे-णैव तु स्वकीयत्वपरकीयत्वनिर्धारणम् कर्तव्यम् । नेतिकरणमा-त्रात् । अन्यथा—

अम्भोरुहमिवाताम्रं मुग्धे करतलं तव ।
इति धर्मोपमा साक्षात् तुल्यधर्मप्रदर्शनात् ॥

इत्यादिषु दण्डी परकीयमेवोदाहरतीति वक्तव्यं स्यात् ।

---

* P. V. Kane P. XIX. There are several examples in the work that are obviously borrowed e. g. IV, 8 दाडिमानि दशापूपाः षडित्यादि यथोदितम्........ 1. 41. 'हिमापहामित्रधरै-र्व्याप्तं व्योमेत्यवाचकम्'

यद्यपि कृत्स्नस्य श्लोकस्य काव्यादर्शे दर्शनात् काव्यालङ्कारे स्थितेनांशेन तत उद्धृतेन भाव्यमिति, सोऽपि निर्बन्धो निर्हेतुकः। यथा 'मायेव भद्रेति यथा' इत्यादिषु अल्पपदमेवोदाहरणं ददाति, न पूर्णश्लोकं ; तथाऽत्रापि भामहः स्वयमेव हिमापहेत्युदाहरणं ददाति । तदादायांशान्तरं पूरयन् दण्डी पूर्णं श्लोकं पठतीति वस्तुतत्त्वे स्थिते का नामानुपपत्तिः।

---

इति प्रथमपरिच्छेदे 'षष्ट्या शरीरं निर्णीतम्'। अथ द्वितीयतृतीययोर्द्वयोः 'शतषष्ट्या त्वलंकृतिः' निर्णीयते। तत्र यद्यपि

उपमा रूपकं चैव दीपकं यमकं तथा।

इति चतुर एवालङ्कारान् भरतः प्रतिजानीते , तथाऽपि तदुक्तमालायमकस्यानुप्रासत्वेन पृथक्त्वं कल्पयित्वा

इति वाचामलङ्काराः पंचैवान्यैरुदाहृताः। (II. 4)

इति प्रथमं भरतोक्तानलङ्कारान्निरूपयति ।

अत्रोपमायां सप्त दोषा मेधाविनोक्ता इति वदन् तान्निरूपयति । ततः परमाक्षेपः अर्थान्तरन्यासः व्यतिरेकः विभावना समासोक्तिः अतिशयोक्तिः इति षडलङ्कारान्। अत्र हेतुसूक्ष्मलेशानामलङ्कारत्वं प्रतिषेधति । अथ यथासंख्यमुत्प्रेक्षेति द्वौ । अनन्तरं स्वभावोक्तिम्। इति चतुर्दशालङ्कारान् निरूप्य द्वितीयं परिच्छेदमवसाययति , परिच्छेदान्तरेण त्रयोविंशतिं एकं चालङ्कारान् निरूपयिष्यन्। 'शतषष्ट्या त्वलङ्कृतिः' इति अलङ्काररूपैकार्थपरतया शतषष्टेरपि श्लोकानामेकपरिच्छेदत्वे युक्ते किमित्यवमर्धनिरूपणे कृते परिच्छेदावसानं करोति ?

अत्र हेतुं स्वयमेवाविष्कुर्वन्नाह—

स्वयं कृतैरेव निदर्शनैरियं
मया प्रक्लृप्ता खलु वागलङ्कृतिः। (II. 96)

इति। निरूपितानां चतुर्दशानामप्यलङ्काराणां उदाहरणानि स्वकीयानि। निरूपयिष्यमाणानां तु केषांचित् परकीयाण्यपि प्रदर्शयिष्यन्ते। अनेन विशेषेण मध्ये परिच्छेदसमापनम् । एवमुदाहर-

णानां स्वकीयत्वोक्तिर्द्वितीयपरिच्छेदस्थालङ्कारमात्रपरेति स्पष्टं प्रतीयमानेऽत्र नवीनानां विकल्पनास्सर्वाः तात्पर्याग्रहणमात्रमूला इति ज्ञेयम् । द्वितीयपरिच्छेदेऽपि राजमित्रशाखावर्धनाद्युदाहरणात् स्वयंकृतैरेवेत्यवधारणमनुपपन्नमिति चेदुक्तमगृह्णद्भिरेवेदं पृच्छ्यते । अलङ्काराणामुदाहरणानि सर्वाणि स्वकीयानीत्युच्यन्ते । न तु अलङ्कारदोषाणामपि । तत्र स्वकीयानि परकीयाणि वा परिच्छेदान्तरार्थेष्विवेत्यास्तां तावत् ।

एवं भामहप्रदर्शितमेव पन्थानमनुसरन् दण्डी आवापोद्वापाभ्यां परिष्कृत्यालङ्कारान्निरूपयति । तत्रादौ भामहेन माधुर्यं, ओजः, प्रसादश्चेति त्रयं न्यरूपि । अस्य त्रयस्य स्वेन प्रथमपरिच्छेद एव निरूपितत्वेन इहानिरूपणमिति ज्ञापयन्नाह दण्डी—

काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलंक्रियाः ।
साधारणमलङ्कारजातमद्य प्रदर्श्यते ॥

इति । तथा अनुप्रासयमकयोः शब्दालङ्कारयोः वाङ्माधुर्यरूपत्वेन प्रतिपादितत्वात् अत्र परित्यागः । अवशिष्टेषु भामहोक्तेषु षट्त्रिंशत्यलंकारेषु अनन्वयससन्देहोपमेयोपमानां उपमायां, उपमारूपकस्य रूपके, उत्प्रेक्षावयवस्य उत्प्रेक्षायां चान्तर्भावं दण्डी मन्यते । भामहेन प्रतिषिद्धान् हेतुसूक्ष्मलेशांस्तु पृथगलंकारतया गणयति । तथा आवृत्तिदीपकमपि । एवं पञ्चानामुद्वापस्य चतुर्णामावापस्य च करणात् दण्डिनो मतेन पञ्चत्रिंशदर्थालङ्काराः । कालक्रमेण जातैस्तैस्तैरालङ्कारिकैः केचित्केचिदलङ्काराः प्रत्यपाद्यन्तेति क्रमेण जातामलङ्कारवृद्धिमभिव्यञ्जयन् भामहः वर्गशोऽलङ्कारान् न्यरूपयत् । अत एव हि उपमाप्रभेदत्वेन उपस्थितस्यापि उपमेयोपमादेः निरूपणमकुर्वन्

'इत्युक्त उपमाभेदो वक्ष्यते चापरः पुनः' इति वक्ष्यमाणतया प्रत्यजानीत । तत्र तत्र च अन्ये केचिदिति निर्दिशति । परिच्छेदभेदवत् वर्गभेदमप्यनपेक्षितं मत्वा तु दण्डी प्रथममेव पञ्चत्रिंशतोऽप्यलङ्काराणामुद्देशं करोति । तत्र भामहीय एव क्रमः उत्सर्गत आश्री-

यते। सति तु हेतौ क्रमान्तरमपि । उत्प्रेक्षायाः परतः स्वभावोक्ति-र्भामहेनादर्शि। दण्डी पुनः

भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम् ।

इति विभागं करिष्यमाणं मनसि निधाय, वक्रोक्तिमध्ये स्वभावो-क्तिनिवेशनेऽनौचित्यं मत्वा, सूचीकटाहन्यायेन सर्वतः प्राथम्ये औचित्यमभिसन्धाय चादौ स्वभावोक्तिं निर्दिशति । बहुतरप्रभेद-त्वात् अलङ्कारान्तरेष्वप्यनुस्यूतत्वाच्च ततःपरमुपमा कीर्त्यते।

उपमैव तिरोभूतभेदा रूपकमुच्यते।

इति इवाद्यभावमात्रकृतभेदं रूपकं ततः परस्तात् । आवृत्तेः दीपक-प्रभेदत्वात् तदनन्तरमेव स्थानम् । आह च स्वयमेव 'दीपकस्थान एवेष्टं' इति । आक्षेपादिषु च शब्दतोऽपि भामहानुसरणम्। अतिशयोक्तेरनन्तरं भामहेन निराकृतानां हेतुसूक्ष्मलेशानां तत्रैव प्रतिपादनमिह भवति । उत्प्रेक्षायाः पूर्वं भामहेन निरूपितस्य यथा-संख्यस्य लेशादनन्तरमिह यन्निर्देशः तत्र वृत्तानुरोधः कारणम् । एवं श्लेषापह्नुत्योः विरोधतुल्ययोगितयोश्च क्रमान्यथाभावे वृत्तानु-रोध एव हेतुः ।

'भीष्मो द्रोणस्सूतपुत्रस्तथाऽसौ'

इति अभ्यर्हितत्वेन पूर्वश्लोके भीष्ममेव आदौ निर्दिष्टवताऽपि गीताकविना श्लोकान्तरे

'द्रोणं च भीष्मं च जयद्रथं च'

इति पश्चात्तस्य कीर्तनं क्रियते। तत्र वृत्तानुरोधमन्तरा नान्यो हेतुः सुवचः । भरतोऽपि प्रथमं दोषान् पश्चात् गुणांश्च निरूपि-तवानपि 'एवमेते ह्यलंकारा गुणा दोषाश्च कीर्तिताः' इति उपसंहारे क्रमान्तरमाश्रयति । दण्ड्यपि स्वयं 'काव्ये दोषा गुणाश्चैव' इत्यादावुद्दिश्य तेनैव क्रमेण निरूप्यापि च अन्ते 'गुणा दोषाश्च काव्यानां' इत्युपसंहरति । छन्दःसारस्यमात्रं ह्यत्र निबन्धनम्। नान्यत् । तद्वदिहापीति कामं युक्तम् । लेशस्य लव इति पर्यायः प्रसिद्ध एव । भामहः यथासंख्यमिति प्रथममुक्त्वा 'संख्या-

नमिति मेधावी' इति नामान्तरमप्याह । तत्र दण्डी 'यथा-संख्यमिति प्रोक्तं संख्यानं क्रम इत्यपि' इति तृतीयं नाम दर्शयति । एवं भामहेनाकथितमपि क्रम इति नाम वृत्तानुरोधादेवादौ दण्डी प्रयुङ्क्ते । भामहेन सर्वान्ते दर्शिताया आशिषः सङ्कीर्णात् पूर्वं निवेशनं तस्या उपमादिवत्केवलालङ्कारत्वात् । केवलालङ्काराणां संमिश्रणे हि सङ्कीर्णं भवति । तस्मात् येषां पृथगवस्थितियोग्यानां सङ्करेऽलङ्कारान्तरं भवति, तेषां सर्वेषां आदौ निरूपणं युक्तमिति ।

अस्मिन् अलङ्कारोद्देशे 'दीपकावृत्ती' इति वक्तव्ये 'दीपकावृती' इति अपशब्दप्रयोगादिसद्भावात् नायं दण्डिना कृत इति केचित् सन्दिहत इति केचिल्लिखन्ति । सोऽयमेषामस्थाने सन्देहः । आङ्पूर्वात् 'वृतु वर्तने' इत्यस्मात् धातोः 'इगुपधात् कित्' इत्युणादिचतुर्थपादसूत्रेण आवृतिशब्दनिष्पत्तिरिति तरुणवाचस्पतिदर्शितरीत्या आवृत्तिरित्यर्थे आवृतिशब्दस्य साधुत्वे न कश्चिद्दोषः । 'गमिकर्मीकृतनैकनीवृता' इति श्रीहर्षादिप्रयोग इव इगन्ततया आङ्पूर्वस्य वृतुधातोरुपादानं तदर्थपरतयेत्यपि वक्तुं शक्यम् । बहुधा चैवं शबरादीनां प्रौढानां प्रयोगो दृश्यत इति नात्राल्पोऽपि संशयितुमवसरोऽस्ति । अप्रस्तुतप्रशंसास्थाने अप्रस्तुतस्तोत्रपदोपादाने न काऽपि न्यूनता । अशक्तिमेतत् प्रदर्शयतीति चेत्, नैव । भामहः 'प्रेयो रसवदूर्जस्वि' इत्यारभ्य चतुर्षु श्लोकेषु त्रयोविंशतिमलङ्कारान् घटयति । अत्र छन्दःपूरणाय सप्त चकाराः त्रयोऽपिकाराश्च प्रयुज्यन्ते *। इदमयुक्तं मन्यमानोऽयमलंकारनिर्देशकारः पञ्चत्रिंशतोऽप्यलंकाराणां चतुर एव श्लोकान् कृत्वा एकमपि चकारमपिकारं वाऽप्रयुञ्जानः रचनाकौशलविशेषं प्रदर्शयति, नाशक्तिम् । 'अथ भाविकम्' इत्येकमव्ययं दृश्यते । तदपि स्वभावोक्त्यादिष्वन्येष्वलंकारेषु वाक्यविषयेषु सत्सु भाविकं प्रबन्धविषयतया वि-

---

*'उपमारूपकं चान्यदुपमेयोपमामपि' इत्यत्र 'अन्य'दित्यपि पादपूरणमात्रफलकम् । 'उपमारूपकं चान्य उपमेयोपमामपि' इति वा पाठो भवितुमर्हति ।

लक्षणमिति सूचनाय । अथ 'परिवृत्त्याशीः' इत्यत्र द्विवचनेन भाव्य-म् । परिवृत्तिसहिता आशीः इति मध्यमपदलोपकल्पनमस्वरसमिति यदि शङ्क्येत, तदपि न । 'परिवृत्त्याशीः संकीर्णम्' इति समा-हारद्वन्द्वेन एकवद्भावाश्रयणात् । 'सहोक्तिः' इत्यत्रापि उच्चारणे प्रयत्नाधिक्यसापेक्षत्वात् श्रवणमाधुर्यभञ्जकत्वाच्च विसर्गो न युज्य-ते । तेन 'सहोक्तिपरिवृत्त्याशीःसंकीर्णमथ भाविकम्' इत्येव दण्डि ना पठितमासीदिति युक्तं कल्पयितुम् । यदि दण्डिना इमे उद्देश-श्लोकाः नाकरिष्यन्त, नूनमुत्तरत्र निरूपणावसरे अलंकाराणां भामहीय एव क्रमोऽद्रक्ष्यत ।

उपमायां तद्धितसमासादिकृतं भेदं दण्डी न रोचयते । चमत्का-रविशेषाभावात् । उक्तिप्रकारभेदे हि काव्येषु चमत्कारभेदः, न व्याकरणानुशासनभेदादिति स मन्यते । आह चेदमप्पय्यदीक्षितोऽपि चित्रमीमांसायाम् —

> एवमयं पूर्णालुप्ताविभागो वाक्यसमासप्रत्ययविशेषमात्रगोच-रतया शब्दशास्त्रव्युत्पत्तिकौशलप्रदर्शनमात्रप्रयोजनो नातीव अलंकारशास्त्रे व्युत्पाद्यतामर्हति ।
>
> (चि. मी. P. 27)

इति । प्रकारान्तरेण तु चमत्कारिणो बहव उपमाभेदा इति 'तस्याः प्रपञ्चोऽयं प्रदर्श्यते' इति प्रतिज्ञाय प्रदर्शयति । मेधाव्युक्तान् सप्त उपमादोषान् निरूपयन् भामहः 'हीनता असम्भवः उपमानाधिक्यं असदृशत्वम्' इति चतुर्णां दोषतां निरस्य लिङ्गभेदः वचनभेदः विपर्यय इति त्रीनङ्गीकरोति । अत्र विपर्ययस्य हीनाधिकभेदेन द्विविधत्वात् चत्वारो दोषाः भामहेनाङ्गीकृता भवन्ति । एष्वपि चतुर्षु दोषता न नियतेति भामहमाक्षिपन्नाह दण्डी—

> न लिङ्गवचने भिन्ने न हीनाधिकताऽपि वा ।
> उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥

इति । अतिशयोक्तिनिरूपणेऽवसिते

> हेतुश्च सूक्ष्मो लेशोऽथ नालंकारतया मतः ।

इत्येकेनैवार्धेन भामहस्तेषामलंकारतां प्रतिषेधति । अत्र ससंरम्भं खण्डनं कुर्वन् दण्डी—

हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम् ।

इत्येकेनैवार्धेन त्रयाणामप्यलंकारश्रेष्ठत्वं प्रतिजानीते । यदि दण्डी अदृष्टभामहग्रन्थः इह त्रयाणामेषामलंकारोत्तमत्वप्रतिज्ञानं सर्वथा नोपपद्यते । उद्देशक्रमेण एकैकालंकारनिरूपणं समाप्य हि अलंकारान्तरप्रस्तावः कर्तुमुचितः । तथैव ह्यन्येषु पूर्वोत्तरेष्वलंकारेषु दृश्यते ।

प्रेयः प्रियतराख्यानं रसवद्रसपेशलम् ।
ऊर्जस्वि रूढाहंकारं ... .... ... ॥

इति त्रयाणामेकत्रोपादानं 'युक्तोत्कर्षं च तत्त्रयं' इति त्रयाणामुत्कर्षे सत्येवालङ्कारत्वमित्युपदेशलाघवायेति मन्तव्यम् । सहोक्तिपरिवृत्त्योरपि एकस्मिन् श्लोके लक्षणकथने श्लोकपूरणसौकर्यादिहेतुः कश्चिदनुसन्धेयः । 'हेतुश्च सूक्ष्मश्च लेशश्च वाचामुत्तमभूषणम्' इति दण्डी विवक्षति । अवधारणसंरम्भसूचकेषु चकारेषु द्वौ श्रूयेते । अपरः समासप्रत्यायितार्थः । अन्यतमोऽप्यत्रानलङ्कार इति वक्तुं न शक्यत इत्यभिप्रायः ।

उदात्तालङ्कारस्य द्वितीयं प्रकारं भामहस्यानिष्टमपि दण्डी स्वीकरोतीति वृत्तावेवादर्शयाम ।

अपह्नुतेरुपमागर्भत्वमाह भामहः । उपमानोपमेयभावरहितस्थल एवापह्नुतिमिच्छन् निरूपयंश्च दण्डी—

उपमापह्नुतिः पूर्वमुपमास्वेव दर्शिता ।

इति उपमान्तर्भावं मन्यते । एवं श्लेषस्यापि उपमागर्भस्योपमायामेव तन्मतेऽन्तर्भावः ।

आशीःपर्यन्तेष्वलङ्कारेषु निरूपितेषु भामहोक्तानां केषांचिदलङ्काराणामनिरूपणे हेतुं विवक्षन्नाह दण्डी—

अनन्वयससन्देहावुपमास्वेव दर्शितौ ।
उपमारूपकं चापि रूपकेष्वेव दर्शितम् ॥

उत्प्रेक्षाभेद एवासावुत्प्रेक्षावयवोऽपि च ।

इति । भामहोक्तायाः स्वयमनिरूपिताया उपमेयोपमाया एवं क्वचिदन्तर्भावः कुतो दण्डिना नोच्यत इति चेत्, उपमेयोपमेति नाम्नैव तस्य उपमान्तर्भावस्य सुस्पष्टमवगतत्वादिति ग्रहीतव्यम् ।

आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् ।
कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ।

इति संसृष्ट्युदाहरणं दत्वा उत्तरार्धस्थस्य अर्थान्तरन्यासस्याङ्गतया घटितेन श्लेषेण उपस्थापितं कञ्चिदंशमाह दण्डी—

श्लेषः पुष्णाति सर्वासु प्रायो वक्रोक्तिषु श्रियम् ।

इति । "श्लेषो न केवलमर्थान्तरन्यास एव, सर्वासु वक्रोक्तिष्वपि श्रियं जनयति" इति व्याख्याताऽत्र भावं वर्णयति । उपमारूपकाक्षेपव्यतिरेकाप्रस्तुतप्रशंसादिषु स्वयं दण्डी श्लेषसमन्वयमदर्शयत् । तथाऽर्थान्तरन्यासेऽपि । तमिह सङ्कीर्णेऽपि घटयन् दण्डी बह्वलङ्कारशोभातिशयहेतुतया तं प्रशंसितुमिदमाहेति युक्तम् । वक्रोक्तिशब्दार्थवैशद्याय उत्तरार्धम्—

भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम् ।

इति । एवमयं यथादृष्टो दण्डिश्लोकः सर्वथा समञ्जस एव दृश्यते । तथाप्यत्रासङ्गतिं मन्यमानाः केचित्

"तदुक्तम्—

वक्रत्वमेव काव्यानां परा भूषेति भामहः ।
श्लेषः पुष्णाति सर्वासु प्रायो वक्रोक्तिषु श्रियम् ॥"

इति भोजराजेन स्वकीये शृङ्गारप्रकाशे उदाहृतं श्लोकं दृष्ट्वा 'दण्डिन एवायं श्लोको भवितुमर्हति । किं तु पूर्वार्धमद्यतनेषु काव्यादर्शकोशेषु त्रुटितमिति मंतुं युक्तं' इत्यभिसन्दधति * । यदि वस्तुतः एवमिदमिति प्रमाणबलान्निश्चेतुं शक्यते, नूनं ततःपरं दण्डिभामहयोः पौर्वापर्यविवादः अत्यन्ताय शान्तो भवेत् । परं तु अत्रैवासङ्गतिरस्माकं भाति । यदि पूर्वार्धं तादृशं, शेषः पुष्णातीत्यादि चोत्तरार्धम्; भिन्नं द्विधेत्यादि कस्य श्लोकस्यार्धं भवेत्? न हि प्राचीनस्य

* See Dr. A. Sankaran's thesis: P. 23.

भामहस्य कृताविव दण्डिनः कच्चिदर्धद्वयघटितं पद्यं पठामः, येनेह तथेति गृह्णीयाम। नापीदमर्धं प्रक्षिप्तमेवेति प्रमाणं विना कल्पयितुं शक्यम्। एतदनुसारेणैव च सरस्वतीकण्ठाभरणकृता

वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्च वाङ्मयम्। (V. 8.)

इत्युच्यते। यदपि सर्वालङ्कारनिरूपणान्ते भामहोक्तवक्रोक्तिप्राधान्यप्रतिपादनौचित्यात् सम्यगिदं सङ्गतमिति, तदपि न। भाविकालङ्कारस्य इतःपरमेवाभिधास्यमानत्वात्। तस्मादन्येन केनचिद्ग्रन्थकारेण 'वक्रत्वमेव काव्यानां' इत्यादिना भामहमतमभिधाय 'श्लेषः पुष्णाति' इत्यादिना दण्डिमतप्रतिपादने प्रवृत्तम्। तद्भोजराज उदाहरतीति तर्कयामः।

---

यथा दण्डी तथा भट्टिरपि दृष्टभामहीयकाव्यालङ्कारग्रन्थ इति तदीयरावणवधपरिशीलनादवगच्छामः। तत्र दशमसर्गे, यमके भट्टिना विस्तरः क्रियते; अर्थालङ्कारेषु क्वचित् क्रमभेदोऽप्याश्रीयते। यथा—अयथाभामहं दीपकमादौ निबध्यते। पश्चाद्रूपकम्। एवमर्थान्तरन्यासः पूर्वम्। अनन्तरमाक्षेपः।

स्वविक्रमाक्रान्तभुवश्चित्रं यत्र तवोद्धतिः।
को वा हेतुरलं सिन्धोर्विकारकरणं प्रति॥

इति भामहीयमाक्षेपोदाहरणश्लोकम्,

बुद्धिमान् राक्षसो मूढश्चित्रं नासौ यदुद्धतः।
को वा हेतुरनार्याणां धर्म्ये वर्त्मनि वर्तितुम्॥

इति भट्टिश्लोकं च पश्यतां इमौ उभावदृष्टपरस्परौ इति वक्तुं नैव प्रवृत्तिर्जायेत। तत्र लक्ष्यकारस्य लक्षणकारानुसारित्वस्य युक्तत्वात्, 'स्वयंकृतैरेव निदर्शनैः' इति भामहेनान्यानुपजीवित्वस्य कण्ठोक्तत्वाच्च भामहं भट्टिरुपजीवतीति युक्तं ग्रहीतुम्। 'दूर्वाकाण्डमिव श्यामं तन्वी श्यामा लता यथा' इति भामहीयमुपमोदाहरणम्, 'दूर्वाकाण्डमिव श्यामा न्यग्रोधपरमण्डला' (V. 18) इति भट्टिश्लोकार्धं चात्र चिन्तनीयम्। एवं भामहीयातिशयोक्तिस्थाने स्वभावोक्तिः। स्वभावोक्तिस्थानेऽतिशयोक्तिः। तत्रायं स्वभावोक्तिमान् श्लोकः—

अथ लक्ष्मणतुल्यरूपवेषं गमनादेशविनिर्गताग्रहस्तम् ।
कपयोऽनुययुः समेत्य रामं नतसुग्रीवगृहीतसादराज्ञम् ॥

अत्र स्वभावोक्तिं विना अलङ्कारान्तरं नास्तीति ग्रहणे मन्ये विदुषां नैव क्लेशो भवेत् । भट्टिकाव्ये (जीवानन्दीये) अस्य श्लोकस्याधस्तात् 'अतिशयोक्तिः' इति मुद्रितं दृश्यते । व्याख्यातारौ जयमङ्गल-भरतसेनावपि अतिशयोक्तिमेवात्र सतीमाहतुः । तत्र जयमङ्गलः—

सुष्ठ्वपि नामासौ लक्ष्मणे च (लक्ष्मणेन ?) तुल्यरूपवेषः स्यात् । न तु प्रत्यक्षप्रमाणपरिच्छेद्य इति लोकातिक्रान्तवचनमेतद्वचनम् ।

इति ; अन्यः—

... ...अतिशयोक्तिप्रतिपादनात् । आज्ञानन्तरमेव कपीनामनुगमनेनैव भक्त्यतिशयत्वं (?) लक्ष्मणतुल्यताभिधानेन तद्गतहर्षशोकातिशयत्वं च ।

इति च उपपादनं करोति । अत्र सामञ्जस्यं कियदिति किमेतेनोक्तं भवतीति च स्वयमभिज्ञैश्चिन्तनीयम् । अतिशयोक्तिमान् श्लोकश्च-

विषधरानिलये निविष्टमूलं
शिखरशतैः परिमृष्टदेवलोकम् ।
घनविपुलनितम्बपूरिताशं
फलकुसुमाचितवृक्षरम्यकुञ्जम् ॥

इति । अत्रातिशयोक्तिरस्तीति ग्रहणे च नूनं न कस्यचित् क्लेशो भविष्यति । अथापि पुस्तके पूर्ववत् विपरीतमेव दृश्यते । अस्य श्लोकस्याधस्तात् 'वार्ता' इति दृश्यते । व्याख्यातारौ च पूर्ववदेव यत्किञ्चिदाहतुः । वार्तेति अधो लिखितत्वात् कथञ्चित् तत् सङ्गमयितव्यमिति जातनिर्बन्धाविमौ 'स्वभावोक्तिर्द्विधा विशिष्टा केवला चेति । तत्र विशिष्टा 'स्वभावोक्तिरलङ्कार इति केचित् प्रचक्षते ।' इत्यभिहिता । केवला

गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।
इत्येवमादिकं काव्यं वार्तामेनां प्रचक्षते ॥

इत्यभिहिते' ति लिखतः । अयमबद्धः पाठ इति वृत्तिपरिशिष्टेऽवोचाम । हेत्वादीनां त्रयाणां अलङ्कारत्वनिराकरणपरश्लोकानन्तरं काव्यालङ्कारे अयं श्लोकः पठ्यते ।

समासातिशयोक्ती च षडलंकृतयोऽपराः * ।

इति पूर्वस्मिन् उद्देशश्लोके वार्ता न कीर्त्यते । यथासङ्ख्यौत्प्रेक्षे निरूप्य तदनन्तरं स्वभावोक्तिर्निरूपयिष्यते । तथा सति स्वभावोक्तिविशेषस्य वार्तालङ्कारस्यात्र निरूपणे का सङ्गतिरिति विचक्षणैश्चिन्तनीयम् । अन्वयोऽप्यस्मिन् पाठे न सुवचः । 'वार्तामेनां प्रचक्षते' इति पृथगिदं वाक्यं समाप्यते । तत्र 'इत्येवमादिकं काव्यं' इत्यस्यान्वयो न घटते । 'एनां' इत्यनेनैव अस्यार्थस्य तत्रोपात्तत्वेन पदान्तरानाकांक्षणात् । 'इत्येवमादिकं यदस्ति तत् काव्यम् ' इति काव्यत्वविधानमत्र सर्वथा न सङ्गतम् । तेन 'इत्येवमादि किं काव्यं' इति स्थितं पाठमादृत्य हेत्वाद्यलङ्कारनिरासपरपूर्वश्लोकशेषतयाऽयं श्लोको व्याख्येयः । इत्येवमादि किं काव्यं— न काव्यमित्यर्थः । किं तर्ह्येतत् । अत्राह वार्तामेनां प्रचक्षत इति । काव्यविदोऽभिज्ञाः ‡ गतोऽस्तमर्कः इत्यादिकं वार्तामाचक्षते । सर्वजनसाधारणं लौकिकसंभाषणं वदन्तीत्यर्थः । 'गतोऽस्तमर्कः । तेन इन्दुर्भाति ; पक्षिणश्च वासाय यान्ति' इति हि हेत्वलङ्कारोऽत्र वक्तव्यः । सेयं लौकिकी वार्तैव । न काव्यत्वापादिका वक्रोक्तिः । तस्माद्धेत्वादयो नालङ्कारा इति पूर्वोक्तोपपादनं कृतं भवति ।

तच्च वार्ताभिधानेषु वर्णनास्वपि दृश्यते ।

इति दण्डिश्लोकेऽपि लोकसीमानतिक्रमरूपस्य कान्तिगुणस्य वार्तासु सद्भाव उच्यते , न वार्तानाम्नोऽलङ्कारस्य । अत्र 'वार्ता नामान्यो-

---

* Prof. M. Rangacharya misreads this as षडलंकृतयोऽवराः and quite wrongly remarks: "Bhamaha mentions six more as of comparatively less importance".

‡ P. V. Kane is wrong in supplying 'some' as the subject to आचक्षते (designate) instead of 'the learned' or the like.

न्यकथन'मिति तरुणवाचस्पतिः। उपचारवचनं वार्तेति तु हेमचन्द्रः। उभयमपि सामान्यव्यवहाररूपमेव।

एतावदुक्त्वा प्रतियातुकामं शिष्यं महर्षेर्नृपतिर्निषिध्य।
किं वस्तु विद्वन् गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त॥

निर्बन्धसञ्जातरुषाऽर्थकार्श्यमचिन्तयित्वा गुरुणाऽहमुक्तः।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति॥

इति कालिदासीयरघुवंशमहाकाव्यान्तर्गतौ हि इमौ श्लोकौ भामहदृशा केवलं वार्तारूपौ वक्तव्यौ। नालङ्कारः कश्चिदत्र सुवचः। तथैव गतोऽस्तमर्क इत्यादि। दण्डी पुनः उक्तरीत्या इन्दुभानादिकं प्रति कारकहेतुत्वेन अर्कास्तमयप्रतिपादनस्य अलङ्कारत्वाभावेऽपि अर्कास्तमयेन्दुभानपक्षिवासयानानां कालविशेषं प्रति ज्ञापकहेतुत्वेन, साक्षात् कालविशेषमनुक्त्वा हेतुना ज्ञापनात् वक्रोक्तित्वमस्तीत्याश्रित्य अस्त्येवालङ्कारत्वमिति मन्यमानः

इतीदमपि साध्वेव कालावस्थानिवेदने *

इत्याह। एवं सति पर्यायोक्तमेतदिति न भामहमते किमपि दूषणं लग्नं भवति। किञ्च उक्तरीत्या कारकहेतोरलंकारत्वनिराकरणेऽपि अनुमानप्रक्रियया ज्ञापकहेतोः काव्येषु प्रयोगो भामहस्येष्ट एव।

अपृथक्कृतसाध्योऽपि हेतुश्चात्र प्रतीयते।
अन्वयव्यतिरेकाभ्यां विनैवार्थगतेर्यथा॥ (V. 50)

दीप्रदीपा निशा जज्ञे व्यपवृत्तदिवाकरा। (V. 51)
हेतुः प्रदीप्रदीपत्वमपवृत्तौ रवेरिह॥

इति वदन् हि भामहो गमकरूपहेतोः काव्येषु प्रयोगमात्मनाऽङ्गीकृतमावेदयति।

'तज्ज्ञैः काव्यप्रयोगेषु तत्प्रादुष्कृतमन्यथा'

इत्युपक्रमेऽभिधानात्। एवं न्यायप्रकरणे भामहोक्तमनुसृत्यैव उद्भटः

---

* अत्र 'ज्ञापकहेतुमात्रं नालंकारः' इति वदन् तरुणवाचस्पतिः न दण्डिनोऽभिप्रायमाविष्करोति।

'काव्यदृष्टान्तहेतू च' इति हेतुशब्देनैव हेतुं निर्दिश्य निरूपणावसरे 'काव्यलिङ्गं तदुच्यते' इति लिङ्गपदं प्रयुङ्क्ते। किं तु ज्ञापकहेतोरलङ्कारप्रकरणेऽकथनात् प्रत्युत सामान्येन हेत्वलङ्कारनिषेधाच्च ज्ञापकहेतोरलङ्कारत्वप्रतीतिः काव्यालंकारात् स्फुटं न जायते। औद्भटात् काव्यालङ्कारसंग्रहात् तु तथा सा जायत इति विशेष इत्यप्यत्र द्रष्टव्यम्। वस्तुतत्त्वमेतत् प्रसङ्गादुक्तम्। प्रकृतेऽवधेयं तु एवम्—

दत्त्वोदाहरणद्वन्द्वं ज्ञापको वर्णयिष्यते।

इति प्रतिज्ञाय पठिते

गतोऽस्तमर्को .... .... .... कालावस्थानिवेदने॥

इति श्लोके दण्डिना हेतुत्वस्य साधनात् एतद्दूष्ये भामहश्लोके हेतुत्वनिराकरणमेव क्रियते, न वार्तारूपमलङ्कारान्तरमुच्यते। तेन वार्ता नामालंकार एव यत्र क्वापि नास्तीति।

न परमत्रैकत्रैव एवमन्यथाभावः। अपि तु अलंकारान्तरेऽप्यस्ति। भट्टिश्लोकेषु अस्तुतप्रशंसोदाहरणत्वं यस्य कस्यापि नोच्यते। तत्रेदमस्माकं भाति।

"अधिगतमहिमा मनुष्यलोके बत सुतरामवसीदति प्रमादी।
गजपतिरुरुशैलशृङ्गवर्ष्मा गुरुरवमज्जति पंकभाङ्न दारु॥"

इति श्लोके हेत्वलंकार इत्युक्तमस्ति। अत्र 'प्रमादित्वादवसीदति' 'गुरुत्वान्मज्जति' इति हेत्वपेक्षया उत्तरार्धे प्रतिपादितो गजदृष्टान्त एव पूर्वार्धोक्तार्थोपस्कारकस्सन् चमत्करोति।

समानवस्तुन्यासेन प्रतिवस्तूपमोच्यते।
यथेवानभिधानेऽपि गुणसाम्यप्रतीतितः॥ (II. 34)

क्रियन्तस्सन्ति गुणिनः साधुसाधारणश्रियः
स्वादुपाकफलानम्राः कियन्तो वाऽध्वशाखिनः॥ (II. 36)

इति भामहीये प्रतिवस्तूपमालक्षणोदहरणे बुद्धौ कुर्वतामस्मिन् भट्टिश्लोके प्रतिवस्तूपमाप्रतीतिरवश्यंभाविनी। उत्तरार्धे एवं प्रतिवस्तूपमासत्त्वेऽपि पूर्वार्धे प्रस्तुतं रामं साक्षादप्रतिपाद्य

'अधिगतमहिमा प्रमादी' इत्यप्रस्तुतसामान्यप्रतिपादनादिदमप्रस्तुतप्रशंसोदाहरणं भट्टयभिप्रेतं भवेत् । 'अवसीदति' इति निन्दा प्रतिपाद्यते, न स्तुतिः ; तस्मादियमप्रस्तुतप्रशंसेति न युक्तमिति उद्भटाद्युदाहरणं चिन्तयतां शङ्का न भविष्यति ।

बोद्धव्यं किमिव हि यत्त्वया न बुद्धं
किं वा ते निमिषितमप्यबुद्धिपूर्वम् ।
लब्धात्मा तव सुकृतैरनिष्टशङ्की
स्नेहौघो घटयति मां तथाऽपि वक्तुम् ॥

इत्यत्र'निपुणं'इत्यधस्ताल्लिखितमस्ति। तत्रापि वयं न निर्विचिकित्साः। भामहरीत्या न कश्चिदत्रालंकारस्सुवचः । केवलमियं वार्ता । दण्डिरीत्या कान्तमिति वक्तुं शक्यम् । व्याख्यातारावप्यत्र अलंकारविशेषं वक्तुमशक्नुवन्तौ, 'अस्य चोदात्तेऽन्तर्भावो द्रष्टव्यः' इति, 'निपुणनामाऽयमलंकार इति प्राञ्च इति विद्यासागरः । अस्य प्रेयस्यन्तर्भाव इति देवनाथः... ...' इति च ब्रूतः । इयतीमनुपपत्तिं पश्यन्तः, अत्रत्यः सर्वोऽलंकारनामोल्लेखः न भट्टिना स्वयमेव कृतः ; अपि तु ततोऽर्वाचीनेन केनचिदिति दृढमध्यवस्यामः । काचित्पुस्तकशालायां स्थितेषु भट्टिकाव्यस्य लिखितपुस्तकेष्वन्यतमे एवमलंकारनामोल्लेखो न दृश्यत इति च जानीमः ।

तदेवमलंकाराणां भामहोक्तानां सर्वेषामिहोदाहरणदर्शनात् भामहानुसारी भट्टिरिति सुकरो निश्चयः । शब्दालंकारे बाहुल्यमन्योपजीवनाद्वा स्वप्रतिभावैभवाद्वा भवेत् । क्रमभेदोऽपि तत्र तत्र वर्णनीयविषयानुरोधेन कश्चिदापतन् न भट्टेर्भामहोपजीवित्वनिर्णयप्रतिरोधायालम् । अल्पेऽप्यन्यथाभावे सति उपजीव्योपजीवकभावो न भवतीति येऽभिनिविश्य प्रतिपादयन्ति तेषां उद्भटकृतः काव्यालंकारसंग्रहः समुचितमुत्तरं दास्यतीति विश्वसिमः । उद्भटो हि रूपके चातुर्विध्यं दर्शयति । न तत् काव्यालंकारे दृश्यते । उपमारूपकं, उत्प्रेक्षावयवः, आशीः इतीमान् भामहोक्तानलंकारान् न निरूपयति । संसृष्टिः, काव्यलिङ्गं, काव्यदृष्टान्तः इतीमान् तत्रानुक्तान्

निरूपयति । किं च प्रेयः, ऊर्जस्वि, समाहितं इत्येतेषां त्रयाणां भामहेन लक्षणाकथनेऽपि 'उदाहरण एवास्य रूपमाविर्भविष्यति' इति न्यायेन उदाहरणपर्यालोचनयैव तेषां स्वरूपं काव्यादर्शोक्तरूपमेवेति स्पष्टं विज्ञातुमीश्महे । एतद्वैलक्षण्येन उद्भटः क्रमेण तेषां भावोदयः रसभावा भावाभासः भावशान्तिरित्येतन्निबन्धनरूपत्वमाचष्टे, यदर्वाञ्चः सर्वे आलङ्कारिका अभ्युपगच्छन्ति । एवं बहुष्वंशेषु वैलक्षण्यसत्त्वेऽपि यथा उद्भटस्य भामहीयकाव्यालङ्कारानुरोधित्वं भवति, तद्वदेव दण्डिभट्टयोरपीति स्थितमेतत् ।

अथ वा मा ऽस्तु भट्टिकाव्यस्य दशमसर्गपर्यालोचनम् ।

व्याख्यागम्यमिदं काव्यमुत्सवस्सुधियामलम् ।
हता दुर्मेधसश्चास्मिन् विदुषां प्रीतये मया ॥

इति काव्यस्यान्ते दृश्यमानः श्लोक एव

काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत् ।
उत्सवस्सुधियामेव हन्त दुर्मेधसो हताः ॥

इति काव्यालङ्कारश्लोकेन सह चिन्त्यमानः अलं भट्टेः काव्यालङ्कारदर्शित्वं साधयितुम् । विद्वद्भिः सम्यक् चिन्तनीयं कतरस्य श्लोकस्यात्र प्राचीनत्वं भवितुमर्हति ; कतरस्य तदपेक्षयाऽर्वाचीनत्वमिति । अस्मदीयोऽभिप्रायः काव्यालङ्कारश्लोकस्येति । संवादहेतोः प्रतिपक्षमनाख्याय इमौ द्वौ श्लोकौ केवलं पठित्वा अनयोः पौर्वापर्यं कथं भवितुमर्हतीति व्युत्पन्नं पण्डितं कञ्चिदपृच्छाम । तत्रास्मदभिप्रायस्य संवाद एवाजनि । न विसंवादः । अन्येऽपि विद्वांस एवं संवादिन एव स्युरिति वयं दृढप्रत्ययाः स्मः । 'हन्त दुर्मेधसो हताः' इत्येकः शोचति, काव्यरसास्वादे सर्वाधिकारौचित्यं मन्यमानः । 'अस्मिन् काव्ये विद्वत्प्रीतिमात्रस्योद्दिष्टत्वात् दुर्मेधसामत्र हतिरिष्टैव' इत्यन्यः समादधाति । अत्र पौर्वापर्यमन्यथा वक्तुं कस्य प्रवृत्तिः स्यात्, विना वचनतात्पर्यग्रहणासमर्थान् * ।

---

* P. V. Kane says (P. XXXIX)—'Though there is resemblance in the words, the purport is different. Besides the two verses standing by themselves would rather suggest that Bhamaha criticises Bhatti.' How shrewd and scholar-like ?

10

इति शतषष्ट्याऽलंकृतिं निरूप्य चतुर्थपरिच्छेदे पञ्चाशता दोषदृष्टिं करोति । तत्रादौ

अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।
शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसंधि च ॥
देशकालकलालोकन्यायागमविरोधि च ।
प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टं च नेष्यते ॥ (IV. 1–2)

इति दोषाणामुद्देशं करोति । अत्र प्रथमश्लोकान्ते चकारप्रयोगमसहमानो दण्डी विसंधिकमिति कृत्वा, प्रथमश्लोकं द्वितीयश्लोकपूर्वार्धं च तथैव पठित्वा, उत्तरार्धं

इति दोषा दशैवैते वर्ज्याः काव्येषु सूरिभिः ।

इति दोषाणां दशत्वपरिच्छेदपरं कृत्वा तत्रत्यस्य एवकारस्य विवरणाय

प्रतिज्ञाहेतुदृष्टान्तहानिर्दोषो न वेत्यसौ ।
विचारः कर्कशप्रायस्तेनालीढेन किं फलम् ॥

इत्याह । दशसु दोषेषु प्रथमस्य उन्मत्तादिवक्तृकत्वे गुणत्वात् तदितरवक्तृकस्यासम्भावितत्वात् स दोषः प्रायो न सम्भवतीति दण्डी मन्यते । शब्दपुनरुक्ते भामहेनोक्तमत्र दण्डिना योजितमिति विभाव्यम् ।

अर्थतः शब्दतो वाऽपि तदेकार्थं मतं यथा ।

इति विभज्य कथितस्यापि शब्दपुनरुक्तदोषस्य दण्डिना उदाहरणं न दीयते । 'गम्भीराः स्तनयित्नव इति शब्दपुनरुक्तम् ' इति व्याख्यानवचनस्य सामञ्जस्यमीश्वरो वेद । 'अम्भोधराः स्तनयित्नवः' इति पाठेन भाव्यमित्यभ्यूहेऽपि अर्थपौनरुक्त्यमेव दर्शितं भवति; न शब्दपौनरुक्त्यम् । तस्मात्

अनुकम्पाद्यतिशयो यदि कश्चिद्विवक्ष्यते ।
न दोषः पुनरुक्तोऽपि प्रत्युतेयमलंक्रिया ॥
हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥

इति गुणत्वप्रदर्शनाय दोषत्वप्रसञ्जनमात्रं पूर्वं कृतमिति वेदितव्यम्।

कान्ते इन्दुशिरोरत्ने आदधाने उदंशुनी। (IV. 28)

इति प्रगृह्यहेतुकं सन्ध्यभावं कृत्वा विसन्ध्युदाहरणं भामहः प्रदर्शयति । तत्खण्डयन्नाह दण्डी—

न संहितां विवक्षामीत्यसन्धानं पदेषु यत् ।
तद्विसन्धीति निर्दिष्टं न प्रगृह्यादिहेतुकम् ॥

इति । विसन्धिकस्य गुणत्वं च

मानेर्ष्ये इह शीर्येते स्त्रीणां हिमऋतौ प्रिये ।

इत्युदाहरति ।

अथ न्यायविरोधमुदाहरन् भामहः केनचित्कविना निबद्धे वत्सेश्वरचरितेऽनुपपत्तीर्दर्शयति । तत्र १. विजिगीषुतया प्रतिपादितस्य तस्य पश्चाचारशून्यत्वाभिधानम्, २. स्वदेश एव प्रयुक्तस्य गजच्छद्मनोऽविज्ञानम्, ३. तदुपलम्भने सचिवानामौदासीन्यम् ; ४. कोपनेषु बहुषु शूरेषु शत्रुषु एकाकिनो वत्सराजस्य प्राणापायशङ्कां विना गमनम् ; ५. तात्त्विकस्य महागजस्य दुर्भगस्य चर्मगजस्य च वत्सराजेन विशेषाग्रहणम् ; इति पञ्च दोषाः प्रतिपाद्यन्ते । कथासरित्सागरे सालङ्कायननामादर्शनात् तन्मूलभूतायां बृहत्कथायामपि तन्न कीर्तितमिति निश्चिनुमः । तथा चेत् तत्रेमे दोषा भामहेन नोद्धाट्यन्ते । किं तु तदुपजीव्य अन्येन केनचित्कविना कृते काव्यान्तर इति युक्तमध्यवसातुम् । तत्राद्य वर्तमाने प्रतिज्ञायौगन्धरायणे

अणेण मम भादा हदो अणेण मम पिदा अणेण मम सुदा
मम वअस्सत्ति अण्णहा भट्टिणो वण्णअंता

इतीदं, काव्यालङ्कारे

हतोऽनेन मम भ्राता मम पुत्रः पिता मम ।
मातुलो भागिनेयश्च रुषा संरब्धचेतसः ॥ (IV. 44)

इतीदं च पश्यन्तो विचक्षणाः प्रतिज्ञायौगन्धरायणमेव भामहो दूषयतीति मन्यन्ते । युक्तमेवमवधारयितुम् । मातुलभागिनेयौ तत्रानुपात्तौ* भामहेन कीर्त्येते इत्ययं विशेषः तद्विषयत्वाभावे लिङ्ग-

---

* P.V. Kane p. XXXVIII. Referring to नमोऽस्तु तेभ्यो विद्वद्भ्यः

मिति काव्यगतिमविदुषां प्रधानाप्रधानांशविवेकविधुराणां च भणितमित्यनादरणीयम् । किं तु 'विजिगीषुमुपन्यस्य' इति भामहोक्तस्य विजिगीषुतयोपन्यासस्य अद्य दृश्यमाने प्रतिज्ञायौगन्धरायणेऽदर्शनात्, यस्मादिदं प्रयोगसौकर्याय वा कारणान्तरेण वा संगृहीतं तादृशं, प्रतिज्ञायौगन्धरायणमित्येव या अन्यथा वा प्रथितं काव्यान्तरं दृष्ट्वा भामह एवं दूषणान्याहेति तर्कयामः।

इदमिह युक्तमवगन्तुम्, यदचिरात् प्रकाशिते अज्ञातकर्तृके आश्चर्यचूडामणिसमानकर्तृकतया सम्भाविते वीणावासवदत्तनामनि असमग्रे नाटके भामहोक्ताः सर्वे दोषाः परिहृताः सन्ति। न तत्र कृत्रिमो गजः, अपि तु वास्तवः, 'वन्यद्विपानां परां लीलां शिक्षितवान् कृत्रिमवर्णलक्षणवांश्च'। न तस्याल्पं बलम्। किं तु द्वे सहस्रे पदातयः। द्वे शते मत्तास्तुरगाः। विंशतिर्मत्तवारणाः। तथाऽपि सर्वं सैन्यमन्यत्र प्रहित्य नीलगजग्रहणाय स्वयमेकाकी गच्छति। तथा निश्चये ऋषिशापो निमित्तम्, न मन्त्रिणां दोषः; यतो विष्णुमित्रः

'सखे त्वमिदानीं सर्वैः साधनैर्हस्तिवन्धने प्रयतस्व। अहं पुनस्तं द्विरदवरं स्वीकृत्य शीघ्रमानयिष्ये'

इति राज्ञा उक्तः प्रत्याह—

सापायाः प्रत्यन्ता न च साधु परीक्षिता नदीकक्ष्या।
तस्माद्बलैः समस्तैर्गन्तव्यं नान्यथा तत्र॥

इति। 'भोः त्वयैवाहमागच्छामि' इति वदन्तं त्रिदूषकमपि 'वयस्य, तिष्ठ त्वम्। मम खलु प्राणैः शापितः'। इति साग्रहं राजा प्रति-

---

of Bhamaha, this scholar says: 'It appears to me that the words of Bhamaha नमोऽस्तु तेभ्यो etc. amount to this: that some poet first narrated the story of उदयन and then others (referred to as विद्वद्भ्यः) adopted (नयन्ति) the story for their own purposes... ... ...'. But in reality Bhamaha here makes an ironical remark: 'let there be a bow to those learned who justify (नयन्ति) such a plot of the poet.'

बेधति स्म । तृतीयाङ्के सचिवस्य यौगन्धरायणस्य राजविषया चिन्ता साध्वभिव्यञ्जिता

दृष्टो भवेद्यदि स घोषवती ममैषा
संविद्यते गजवरग्रहणैकहेतुः ।
स्यादत्ययस्तमपि साधयितुं समर्था
व्यालोदरासिततलास्ति ममासियष्टिः ॥

इति । आत्मनः पराक्रमे प्रत्ययदार्ढ्यशाली राजा तथैव परसैन्यं कृत्स्नं आध्मापयति स्म । श्रमातिरेकेण मोहमुपगम्य भूमौ पतितं तं बध्वा परे निन्युरिति, एतादृशे कथावस्तुनि नास्ति काऽपि वाच्यतेति ।

न्यायव्याकरणशास्त्रयोस्तथा गाढः परिचयो भामहस्य यथा तत्सम्बन्धिकतिपयविषयप्रतिपादनमपि काव्यलक्षणग्रन्थे कर्तुं प्रवृत्तिरासीत् ; यत्र दण्डिन उपेक्षा गुर्वी । बौद्धतार्किकाणामपि मतभेदोपन्यासं तन्निरसनं च कुर्वन्नयं स्वकीयं तर्कपाण्डित्यमतीवाविष्करोति । प्रमाणे द्वे एवाभ्युपगच्छन्, 'तत्त्वं भावेन' इति एकत्वार्थे (अभेदार्थे) वैशेषिकसूत्रे प्रयुक्तं तत्त्वशब्दं

उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते । (II. 21.)

इत्यादौ तस्मिन्नेवार्थे प्रयुञ्जानश्च भामहः स्वस्य तस्मिन् दर्शने परिचयातिशयं पक्षपातं च प्रदर्शयति । तथा

विनश्वरोऽस्तु नित्यो वा सम्बन्धोऽर्थेन वा सता ।
नमोऽस्तु तेभ्यो विद्वद्भ्यः प्रमाणं येऽस्य निश्चितौ ।(VI.15)

इति मीमांसोक्तशब्दार्थसम्बन्धनित्यानित्यत्वविचारमनादरायापि सूचयन्,

भूभृतां पीतसोमानां न्याय्ये वर्त्मनि तिष्ठताम् * ।

इत्यागमविरोधमुदाहरंश्च वैदिकग्रन्थमीमांसादिपरिचयमात्मनः

* P.V. Kane forgets that this is an illustration to Agamavirodha when he says 'Kings that drank Soma are highly spoken of at IV. 49.'

प्रकटयति । शास्त्रविदां गोष्ठीषु नूनमतिप्रसिद्धेन भामहेन भवितव्यं येन कुमारिलभट्टभर्तृहरिप्रभृतीन् महतः शास्त्रकारान् खण्डयितुं प्रवृत्तः 'तत्त्वसंग्रह'कारः शान्तरक्षितो नाम प्रौढबौद्धतार्किकःकाव्यालङ्कारस्थान् श्लोकाननूद्य खण्डयति । तत्रानूदिताः श्लोकाः कमलशीलव्याख्यानेन सह वृत्तिपरिशिष्टेऽस्माभिः प्रादर्शिषत । पदानां सौन्दर्ये, अलङ्काराणामवान्तरविकल्पने च यद्यपि दण्डी दूरं विशिष्यते, तथाऽपि सर्वतोमुखे शास्त्रवैचक्षण्ये चिन्त्यमाने भामहः शतगुणं विशिष्यतेतराम् । सूर्यो भामहः चन्द्रो दण्डी । समुद्रो भामहः ; क्रीडातटाको दण्डी । सिंहो भामहः, हरिणो दण्डी । गरुत्मान् भामहः, शुको दण्डी । काव्यलक्षणं प्रणयन्नपि भामहः त्रैलोक्यमग्रतः कृत्वा काव्येषु ग्रथनीयान् सारांशानपचित्य कविभ्यो वितरति । प्राक्तनैरालङ्कारिकैः सर्वैरेकैकांशमात्रे दृगर्पिता बभूव । अयमेकस्तदानीं काव्यसाम्राज्यव्यवस्थापकः । अतोऽस्य 'स्वयं परितर्क्य च' 'अवगम्य स्वधिया च काव्यलक्ष्म' इत्यसकृदभिधाने यत्नः । येषां प्रचण्डं पाण्डित्यं तेषां कवीनां काव्यलक्षणकाराणां वा कृतिषु तदवश्यं पदे पदे आविर्भवति, कियत्या मात्रया काव्यरसं विहन्ति च । भारविमाघयोर्हि शास्त्रपाण्डित्यं स्वाभाविकत्वकृतरसाच्छादकं तत्काव्ययोः स्फुटं दृश्यते । न तथा कालिदासकाव्येषु । नापि भामहग्रन्थे । कालिदासस्य अन्येषां कवीनां च यदन्तरं तदन्तरं भामहस्य अन्येषामालङ्कारिकाणां च । काव्यालङ्कारस्य प्रथमावलोकनसमये

केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि । (II. 2)

इति तदीयमोजोगुणलक्षणं पठित्वा अनन्तरं वयं

न्यक्षेण क्षपितः पक्षः क्षत्रियाणां क्षणादिति ।

स्वच्छन्दोच्चलदच्छकच्छकुहरच्छातेतराम्बुच्छटा—

इत्येवमादितुल्यं किंचित्कर्णे पतिष्यतीति तदनुगुणं कर्णं सज्जीकृत्य उपरि पठितुमारभामहि । किं पुनस्तत्रोदाहरणं स दर्शयति । इदम्—

यथा मन्दारकुसुमरेणुपिञ्जरितालका । ( IV. 2 )

इति । तत्रशलाकायै सन्नद्धे श्रोत्रे पुष्पमाला पतति स्म । ओजःस्यपि इतः परुषतरा वर्णा न प्रयोज्या इति रसिकसार्वभौम एव मन्यते । अर्थपौनरुक्त्यदोषमुदाहरन्नयं—

तामुत्कमनसं नूनं करोति ध्वनिरम्भसाम् ।
सौधेषु घनमुक्तानां प्रणालीमुखपातिनाम् ॥ (IV. 16)

इत्याह । क्वत्यमत्र पौनरुक्त्यम् । बहवो न ज्ञातुमीशते । दण्ड्यपि 'उत्कामुन्मनयन्ति' इति स्पष्टं पौनरुक्त्यमुदाहरति । न तु तथा स्पष्टं भामह उदाहर्तुमिच्छति । एवं स्पष्टदोषं काव्यमेव न भवति । यत्र तु कवीनां प्रमादेन स्खालित्यं सम्भाव्यते तत्रैव वर्जनीयत्वाय दोषत्वमुपदेष्टव्यमित्यभिप्रैति । उत्तरार्धे श्रुतयोरम्भोविशेषणयोरेकेन इतरस्यार्थः क्रोडीकृत इति पौनरुक्त्यमिति एतद्दोषपरिहारे सूक्ष्मेक्षिकां कर्तव्यामुपदिशति । एवं यतिभ्रष्टविसन्ध्यादिदोषेषु, अशास्त्रीयदोषस्य काव्ये सर्वथा प्रसङ्गो नास्तीति कृत्वा रसवत्ताविरोधिन सम्भविन एव परिहारे जागरूकतां सम्पादयति । अत्रागृहीताभिप्राय एव दण्डी भामहं दूषयतीति पश्यामः । षष्ठपरिच्छेदारम्भावसानयोः अर्णवरूपणेन व्याकरणमतिमात्रं यत् भामहः स्तौति तत्र प्रधानं काव्यं विहाय तदुपकारकस्य व्याकरणस्य एवं महती स्तुतिरयुक्तेति , कवीनां व्याकरणापेक्षया छन्दश्शास्त्रं उपयुक्ततरमिति च मन्यमानो दण्डी काव्यस्य सागररूपणं छन्दश्शास्त्रस्य नौकारूपणं च कुर्वन् स्वग्रन्थोपक्रम एव एवमाह—

'सा विद्या नौर्विविक्षूणां गम्भीरं काव्यसागरम् ।

इति ।

---

वामनालङ्कारसूत्रे रुद्रटकृते काव्यालङ्कारे च भामहश्लोकानामस्ति प्रत्यभिज्ञा । तत् सर्वं प्रतिपादयितुं प्रवर्तमानानां अतिविस्तर आपतेदिति साम्प्रतमुदास्महे । वामनालङ्कारसूत्रवृत्तिव्याख्याने कामधेनौ भामहकृतत्वेन बहवः श्लोका उदाह्रियन्ते । तेषामिहानुपलम्भात् ग्रन्थान्तरमपि भामहेन कृतमासीदिति मन्तव्यं भवति

वररुचिकृतप्राकृतसूत्राणां काऽपि टीका भामहकृतत्वेन प्रथते। किमयमेव स भामह इति विमर्शनीयम्। बाधकाभावाद्वा स एवेति निश्चेतव्यम्।

'प्रत्यक्षं कल्पनापोढं' इति दिङ्नागोक्तलक्षणस्यात्राभिधानात् क्रिस्तोः पश्चात्पञ्चशत्यां स्थितस्य तस्य बौद्धतार्किकपरिवृढस्यानन्तरं भामह आसीदित्यनुमीयते। इदं दिङ्नागलक्षणं 'अभ्रान्त'पदप्रक्षेपेण धर्मकीर्तिना परिष्कृतम्। तस्यात्राप्रदर्शनात् यदि धर्मकीर्तेः प्राक्तनो भामहः, तर्हि ५००-६०० मध्येऽस्य स्थितिरिति युक्तं कल्पयितुम्।

---

तर्कव्याकरणादीनि यानि विविधानि शास्त्राणि या च साहित्यविद्या तत्र सर्वत्र ये कृतपरिश्रमाः तेषां तत्र मिथो न्यूनाधिकत्वकल्पनाया नैव प्रसक्तिः। तथाऽपि समीपकालादारभ्य साहित्यविद्यायां अनादरः क्रियमाण आसीत्। तथा शास्त्रेष्वपि यावान् नवीनन्यायव्याकरणयोः संरम्भः न तावान् मीमांसायाम्। तत्रापि पूर्वमीमांसायामात्यन्तिकी उपेक्षा अवालम्ब्यत। एवं साहित्यपूर्वमीमांसयोरनादरस्य इदं फलं यत् पाण्डित्यं क्रमेण ह्रासमुपेयाय। प्राञ्चो ये प्रसिद्धाः प्रौढग्रन्थकारास्ते सर्वे यथा तेषु तेषु शास्त्रेषु तथा मीमांसायामपि परिपूर्णपाण्डित्या इति तत्तद्ग्रन्थदर्शिनां नाविदितम्। साहित्यमीमांसयोर्नास्ति सम्बन्ध इति न विद्वांसो मन्येरन्। काव्यमीमांसयोः सम्बन्धमधिकृत्य उद्यानपत्रिकायां यद्वयं लिखितवन्तः स्मः तत्सहृदयानां कटाक्षमर्हति *। वाक्यरूपो हि सर्वो विद्याप्रपञ्चः। तत्र वाक्यशास्त्रस्य असम्बन्धं ब्रुवाणः कथमभिज्ञः स्यात्। ध्वन्यालोकलोचनादिषु अमीमांसकस्य तलस्पर्शित्वं दुर्लभम्। असम्पन्नमीमांसापरिचयानां बहुषु स्थलेषु स्खालित्यमपरिहार्यमित्यत्र उदाहरणतया, अध्यापनावसरे काव्यप्रकाशे उपमाप्रकरणे वृत्तिग्रन्थस्य व्याख्यानकारैरुक्तेऽर्थे अनुपपत्तिं ता·

---

* Book II. Nos 2-11.

त्विकार्थं च उपन्यस्यन्तो वयं विद्यार्थिनां धारणसौकर्याय याः पंक्तीरलेखयाम ता इहान्ते योजयामः ।

ध्वन्यालोकादौ 'प्रथमे हि विद्वांसो वैयाकरणाः' इत्याद्युच्यमानं पश्यन्तः, काव्यलक्षणकाराणां अतिमात्रमुपजीव्यं व्याकरणमिति मन्यन्ते । वस्तुतस्तु तत्र काव्यस्य ध्वनिसंज्ञाकरणमात्रे वैयाकरणप्रक्रियानुसारित्वमुच्यते । यथा स्फोटव्यञ्जकस्य शब्दस्य ध्वनिरिति ते व्यवहारं कुर्वन्ति तद्वदिह रसव्यञ्जकस्य काव्यस्य ध्वनिरिति व्यवहार इति । यत् पुनः 'जात्यादिर्जातिरेव वा' इति शब्दार्थनिरूपणं तत् मीमांसकसाधारणम् । प्रत्युत यथा मीमांसान्यायान् असकृत्प्रतिपादयन्ति न तथा शास्त्रान्तरविषयानिति मीमांसाया उपजीव्यतरत्वं वक्तुं शक्यम् । आह च स्वयं कण्ठरवेण लोचनकारो मीमांसाया व्याकरणवत् शब्दार्थनिर्णये उपजीव्यत्वम्

ततश्चाभिधावृत्ते वैयाकरणमीमांसकैर्निरूपिते

इति लोचने प्रथमपरिच्छेदान्ते । स्वकृताया अभिधावृत्तिमातृकाया उपसंहारे यन्मुकुल आह ; यच्च तत्र व्याख्याकारो मम्मट आह तदप्यत्र मन्ये उद्धारमर्हति—

"इदानीं प्रकरणार्थमुपसंहरति—

इत्येतदभिधावृत्तं दशधाऽत्र विवेचितम् ॥ १४ ॥

मुख्यस्याभिधावृत्तस्य प्रकाराश्चत्वारो लाक्षणिकस्य तु षडित्येवं दश प्रकारमाभिधावृत्तमत्र विवेचितम् ॥

अधुना फलमेतस्य दर्शयति—

पदवाक्यप्रमाणेषु तदेतत् प्रतिबिम्बितम् ।
यो योजयति साहित्ये तस्य वाणी प्रसीदति ॥ १५ ॥

पदावगतिहेतुत्वात्पदं व्याकरणम् । वाक्यसमन्वयावसायहेतुत्वाद्वाक्यं मीमांसा । प्रमाणप्रतिपत्तिकारित्वात् प्रमाणं तर्कः । एतेषु पदवाक्यप्रमाणशास्त्रेषु चतुर्वर्गोपयोगिसर्वविद्याधिगमोपायभूतेषु त्रिषु प्रविभिद्यमानेषु(?)संक्रान्तानतन्त्रनिरू-

पितस्वरूपप्रतिबिम्बं दशाविधमभिधावृत्तं यः साहित्यादौ सक-ललोकव्यवहारदर्पणप्रख्ये सञ्चारयति स वाचि क्रमेण प्रसी-दन्त्यां वागीश्वरो भवति । ... ... ”

अधनस्येव दातृत्वं क्लीबस्येवास्त्रकौशलम् ।
अज्ञस्येव प्रगल्भत्वमकवेः शास्त्रवेदनम् ॥ (I. 3)

इति भामहेनैवोपपादितरीत्या काव्यमार्गस्यात्यन्तादरणीयतां पश्य-द्भिः पदवाक्यप्रमाणेष्वन्यतमस्याप्यभावे अपरिपूर्णमेव पाण्डित्य-मित्यवदधानैश्च सुधीभिर्यथा लोके पूर्ववत् अगाधवैदुष्यसम्पत्तौ प्रयत्नः क्रियेत तथा स देवदेवो दयतामिति सम्प्रार्थ्य तिष्ठाम-स्तावत् ॥

तन्त्रोद्यानम्
12. 2. 34.

D. T. T.



[अत्र 'पुरोवाचं' कामपि विलिख्य प्रदर्शितपरमादरेषु संस्कृत-साहित्यरसास्वादतत्परेषु सहृदयधुरीणेषु श्रीमत्सु M. कृष्ण-माचार्येषु (M. A., M. L., Ph. D., M. R. A. S., Sub Judge, Devakotta) सर्वदा वयं कृतज्ञा भविष्यामः ।]

---

श्रीः ॥

# काव्यप्रकाशे श्रौती उपमा ॥

पूर्णा विभजते अग्निरित्यादिना । सा इति तु 'पूर्णा लुप्ता च सा' इति पूर्वेण योज्यम् । यथेववादिशब्दा इति । अत्र प्रदीपकारस्यायमाशयः । यथेवादिशब्दा यदनन्तरं प्रयुक्ताः तस्यैवोपमानताप्रतीतिं जनयन्तोऽपि शब्दान्तरविलक्षणेन स्वशक्तिविशेषेण उपमेयेऽपि सम्बन्धं बोधयन्ति षष्ठीवत् । तुल्यादिशब्दाः पुनः एकत्रैव सादृश्यसम्बन्धं बोधयन्तीति तेभ्यः यथेवादिशब्दानां वैलक्षण्यमित्याहुः । एवमप्युपमायाः श्रौतत्वार्थत्वयोर्नोपपत्तिः प्रदर्शिता भवति । तत्रैवं वाच्यम् । यथेवादिशब्दाः तत्र तत्र उपमानोपमेययोर्यः साधारणधर्मः तं तद्रूपेणैव प्रतिपादयन्ति । यथा पद्ममिव मुखं इत्यत्र रमणीयत्वस्य रमणीयत्वत्वेनैव रूपेण इवशब्दात्प्रतिपत्तिः । पद्मेन तुल्यं इत्यत्र तु न पूर्ववद्रमणीयत्वत्वेन रूपेण तत्प्रतिपत्तिः । किं तु समानधर्मत्वेन । एवं समानधर्मत्वेन रूपेण सामान्यतः प्रतिपन्नस्य धर्मस्य 'निर्विशेषं न सामान्यम्' इति न्यायेन विशेषतो जिज्ञासायां उपमानोपमेयादिस्वरूपर्यालोचनया तदवगतिरिति इह आर्थत्वं साधर्म्यस्य । यथेवादौ तु श्रौतत्वमिति ।

अत्रेदं वाच्यम् । यदि यथेवादीनां तुल्यादिशब्दानां च विशेषतः सामान्यतश्च साधारणधर्मप्रतिपादकत्वेनैव श्रौतत्वार्थत्वाभ्यां विभागोपपत्तिः तर्हि 'यद्यपि उपमानविशेषणान्येते' इति शङ्कायाः 'शक्तिविशेषेण उभयत्र सम्बन्धो बोध्यते' इति समाधानस्य च कथमिह सङ्गतिः । न ह्येवंविधविभागोपपादनमन्तरा अन्यत्र तथाविधशङ्कासमाधानयोः उपयोगः सुवचः । यत्तु प्रदीपकारः 'उपमानोपमेयभावरूपसम्बन्धस्य श्रौतत्वार्थत्वाभ्यां विशेषः' इति केषांचिन्मतमुपन्यस्य निरस्यति ; तद्युक्तमेव । न हि उपमानोपमेयभावरूपसम्बन्धे इवादिशब्दानां शक्तिर्लोके ॥ काव्यदर्पणकारस्तु, इवादयः नियमेन उपमानस्य सादृश्यप्रतियोगित्वं बोधयन्ति । तुल्या-

दिशब्दास्तु क्वचित्प्रतियोगित्वं क्वचिदनुयोगित्वमिति न नियमेन प्रतियोगित्वबोधकाः । तदिह नियमेन सादृश्यप्रतियोगित्वबोधकेषु इवादिषु सत्सु श्रौती उपमा । अतथाविधेषु तुल्यादिषु आर्थी ; इति प्राचां मतत्वेन प्रतिपादयति । अत्रापि प्रकाशस्थशङ्काग्रन्थासङ्गतिरेव । अलङ्कारकौस्तुभकारप्रभृतयस्तु इवादिशब्दार्थे उपमानत्वं उपमेयत्वं च कथंचिदन्तर्भाव्य तदुभयाभिधायकत्वेन उपमायाः श्रौतीत्वं तुल्यादिशब्दार्थे अन्यतरमात्रान्तर्भावेन आर्थीत्वं च उपपादयन्ति । अत्रापि इवशब्दस्यार्थान्तराङ्गीकारगौरवं महत् ।

तस्मादत्र प्रकाशग्रन्थस्य एवमर्थो वाच्यः । 'उपमानोपमेययोः समानेन धर्मेण सम्बन्ध उपमा' इत्युपमालक्षणमुक्तम् । यदि यथेवादिशब्दस्थले श्रौत्युपमा इष्यते तर्हि उभयत्र समानधर्मसम्बन्धः शक्त्या प्रतिपाद्यत इति वक्तव्यम् । न चैतदुपपद्यते, यतः यस्माच्छब्दात् यथेवादयः प्रयुज्यन्ते तत्सम्बन्धमेव समानधर्मस्य पदश्रुतिवत् शीघ्रं ते प्रत्याययन्ति । मुखाद्यन्यसम्बन्धं तु समभिव्याहाररूपाद्वाक्यादिति शङ्काग्रन्थाभिप्रायः । तदभ्युपेत्यैव समाधानमुच्यते । साधारणधर्मसम्बन्धस्य यच्चन्द्रादिप्रतियोगिकत्वं यच्च मुखाद्यनुयोगिकत्वं तदुभयमपि शब्देन प्रतिपादनीयमिति न वयं ब्रूमः । किं तु तस्यान्यत एव प्रतिपत्तिमभ्युपेत्य साधारणधर्मसम्बन्धमात्रस्य शक्त्या प्राधान्येन प्रतिपादने श्रौत्युपमेति ब्रूमः । अस्ति हि इवशब्दस्य शक्तिः समानधर्मसम्बन्धे । यथा षष्ठ्याः सम्बन्धसामान्ये शक्तिः तद्वत् । एवं उपमालक्षणे विशेष्यभूतस्य समानधर्मसम्बन्धस्य यथा इवादिशब्दप्रयोगे श्रुत्या प्रतिपत्तिः न तथा तुल्यादिशब्दप्रयोगे । तेषां सादृश्यं न्यक्कृत्य तदाश्रयधर्मिप्रतिपादकत्वात् । यथा मीमांसकाः कर्मत्वकरणत्वादेः शक्त्या बोधकानां द्वितीयातृतीयादीनां श्रुतित्वमभ्युपयन्ति ; 'प्रोक्षिताभ्यां' इति कर्मकृदादौ कर्मत्वाश्रयधर्मिप्रतिपादकत्वेन विशेषणतया कर्मत्वप्रतिपत्तावपि श्रुतित्वं नाङ्गीकुर्वन्ति, तद्वदिह द्रष्टव्यम् । एवं च 'सादृश्यस्य विशेषणतया प्रतिपादने श्रौती ; अन्योपसर्जनतया प्रतिपादने आर्थीति यद्विद्याधर-विद्यानाथप्रभृतयः सर्वे अर्वाञ्चः प्रतिपादयन्ति तत्रैव प्रकाशोक्तस्यार्थस्य

पर्यवसानमिति प्रदीपकारादिकृतं निर्वहणं न युज्यते ।

नागेशस्य तु प्रकाशग्रन्थस्य प्रदीपग्रन्थस्य च व्याख्यानं तत्तद्ग्रन्थकाराभिप्रायविरुद्धमिति, उपमानोपमेययोरभेदेनान्वयप्रतिपादनादुपमायाः श्रौतीत्वानुपपत्तिरिति च नैवादरणीयमित्यन्यदा विस्तरः ।

उपमानविशेषणानीति । उपमानान्वितार्थबोधकानीत्यर्थः । शब्दशक्तिमहिम्नेति । स्वकीयाभिधाव्यापार महिम्नेत्यर्थः । श्रुत्यैव श्रवणमात्रेण । षष्ठीवदिति । यथा षष्ठीविभक्तिः द्वितीयातृतीयादिविभक्तिवत् कारकानभिधायिन्यपि सम्बन्धमात्रमभिधाय श्रुतिर्भवति 'सप्तदश वैश्यस्य' इत्यादौ, तद्वदिवादयोऽपि समानधर्मसम्बन्धं सम्बन्धत्वेन रूपेण प्रतिपादयन्तः श्रुतयो भवन्ति । षष्ठीतरविभक्तेः एवं सम्बन्धवाचित्वाभावात् नात्र दृष्टान्तत्वं घटत इति तदनादरः । उपमेय एवेति । तुल्यशब्दस्य धर्मिवाचकत्वे स्थिते मुखसामानाधिकरण्यादिह उपमेयमात्रवाचित्वम् । तत्तुल्यमस्येत्यत्र उपमानसामानाधिकरण्यात् तन्मात्रवाचित्वम् । 'इदं च तच्चे' त्यत्र उभयसामानाधिकरण्यात् उभयवाचित्वम् । तथा च तत्तत्सामानाधिकरण्यानुरोधेन वाच्यधर्मिविशेषभेदेऽपि सर्वत्र धर्मिवाचित्वं स्थितम् । एवं च सादृश्यस्य श्रुत्या प्रतिपत्त्यभावात् सोमविशिष्टयागविधौ सोमस्येव सादृश्यवत्प्रतीतौ सादृश्यस्यार्थिकत्वमिति पर्यवसितम् ।

इदं चात्र बोध्यम्—तत्तुल्यमस्येत्यत्र चन्द्रस्य तुल्यं मुखं इति केचिद्व्याचक्षते । तन्न युक्तम् । अस्येति इदंशब्देन प्रकृतोपमेयस्यैव, तच्छब्देन अप्रकृतोपमानस्यैव च प्रतिपत्तिस्वारस्यात् । अन्यथा षष्ठ्या उपमानत्वस्य तुल्यपदसामानाधिकरण्येन उपमेयत्वस्य च प्रतीतेः 'उपमान एव विश्रान्ति'रिति प्रकाशग्रन्थविरोधाच्च । न च उपमानमात्रे पर्यवसानस्याभिमतत्वे तेन तुल्यं मुखं इतिवत् तत्तुल्यमनेनेति तृतीयाया एव पर्याप्तत्वे किमिति षष्ठीपर्यन्तानुधावनमिति शंक्यम् । प्रकृतप्राधान्यप्रतिपत्त्यर्थत्वात् षष्ठ्याः । 'तेन तुल्यं' इत्यत्र हि न परं लक्षणया प्रतियोगित्वबोधः, अपि तु अप्रकृतत्वात्मकाप्राधान्यप्रतीतिरपीति ।

---



॥ श्रीः ॥

# भामहीयः काव्यालङ्कारः ।



**प्रणम्य सार्वं सर्वज्ञं मनोवाक्कायकर्मभिः ।**
**काव्यालङ्कार इत्येष यथाबुद्धि विधास्यते ॥१॥**

---

## उद्यानवृत्तिः ।

पण्णातटपरिष्कारपारिजातफलायिता ।
स्वदतां भामहगिरां वृत्तिरेषा विपश्चिताम् ॥

अनुसन्धानात्मना मानसेन शब्दोच्चारणरूपेण वाचिकेन अञ्जलिबन्धदण्डवत्प्रणामादिना कायिकेन च कर्मणा सर्वस्मै हितं 'यः सर्वज्ञः सर्ववित्' इत्युपनिषत्सु श्रुतं परमपुरुषं प्रणम्य काव्यालङ्कारनामाऽयं ग्रन्थो यथामति करिष्यत इति । 'प्रणम्य शर्वं' इत्यपि पाठः । तदा सर्वज्ञं शर्वमित्यन्वयः ॥१॥

ननु किमस्य ग्रन्थस्य फलम् । यत् सत्काव्यनिर्माणस्य तदेव । लक्षणग्रन्थस्य हि लक्ष्यफलेनैव फलवत्त्वम् । तस्य तर्हि किं फलम् । तदुच्यते—

**धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।**
**प्रीतिं करोति कीर्तिंश्च साधुकाव्यनिबन्धनम् ॥२॥**

एकैकं हि शास्त्रं एकैकस्मिन्नर्थे तत्परम् । काव्यं तु सर्वविषयम् । तेन सर्वत्रैव वैचक्षण्यं करोति । न च तद्वदिह शुष्कोपदेशः । किन्तर्हि । प्रीतिं करोति । तेन वशीकृतचेतसां सम्यगुपदेशः क्रियते । ततो वैच-

क्षण्यमिति । न केवलमेतावत् परगतं प्रयोजनं काव्यकरणस्य । किन्तु कवेः कीर्तिश्च तत् करोति । निषेवणमिति पाठे सहृदयकर्तृको रसास्वादपरिचयः कविकर्तृकः काव्यनिर्माणयत्नश्च तन्त्रेणोपात्त इति वेदितव्यम् २

ननु विविधानां शास्त्राणां परिज्ञानात् सर्वमिदं सेत्स्यति । न सेत्स्यति । कस्मात् । यस्मात्

**अधनस्येव दातृत्वं क्लीबस्येवास्त्रकौशलम् ।**
**अज्ञस्येव प्रगल्भत्वमकवेः शास्त्रवेदनम् ॥३॥**

दानौत्सुक्येऽपि दरिद्रः कमिवोपकारं परस्य करिष्यति । शिक्षितास्त्रोऽपि क्लीबः कथमिव परान्निरसिष्यति । समर्थोऽप्यनभिज्ञः कथमात्मनोऽपि हितं कर्तुं शक्ष्यति । तथाऽकविस्सन् शास्त्रवेदी न परस्य हितं कर्तुं अहितं निरसितुं वा आत्मनोऽपि वा हितं कर्तुं शक्नोति । नह्यकविरात्मविदितमाविष्कर्तुं क्षमते ॥३॥

नन्वकवय एव बहवः शास्त्रज्ञा ग्रन्थान् कृत्वाऽर्थानर्थोपदेशेन लोकस्य सुबहूपकृतवन्तः लब्धवन्तश्च कीर्तिम् । सत्यम् । किन्तु कवय एव ते केनाचित् प्रकारेण । शास्त्रकाव्यानि हि प्रायेण प्राचां शास्त्रकाराणां निबन्धनानि । ये पुनः सर्वथाऽकवय एव न शोभत एव तेषां वाक् । तदिदमुच्यते—

**विनयेन विना का श्रीः का निशा शशिना विना ।**
**रहिता सत्कवित्वेन कीदृशी वाग्विदग्धता ॥४॥**

अविनीतानां हि पात्रेष्वप्रतिपाद्यमाना श्रीरसत्समा भवति । तथा सूर्यातपसन्तापपरिहारिण्यपि निशा शशिना विना निखिलमपि जगदन्धमिव कुर्वाणा न शोभते । एवं सत्कवित्वेन रहिता वाग्विदग्धता उपादेयसारशून्यत्वेनानावर्जकत्वात् वाचाटतामात्रपर्यवसायिनी न शोभते ॥४॥

एवं तावत् प्रयोजनविशेषाच्छास्त्रेभ्यः काव्यमतिरिच्यते । कारणविशेषादपि तत्तथा वेदितव्यम् । तथाहि—

उद्यानपत्रिका-

गुरूपदेशादध्येतुं शास्त्रं जडधियोऽप्यलम्।
काव्यं तु जायते जातु कस्यचित् प्रतिभावतः ॥५॥

मितधियामपि शास्त्रज्ञानं सुसम्पादम्। सहकारिणो गुरूपदेशस्य सुलभत्वात्। काव्यस्य तु नान्यदीयः कश्चित् सहकारः शक्यो लब्धुम्। नापि स्मृतिर्बुद्धिर्मतिर्वा प्रज्ञा वा केवलं पर्याप्तं कारणम्। किन्तु प्रतिभा। किंलक्षणा पुनः प्रतिभा। तत्राहुः—

स्मृतिर्व्यतीतविषया मतिरागामिगोचरा।
बुद्धिस्तात्कालिकी प्रोक्ता प्रज्ञा त्रैकालिकी मता।
प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः इति

एवंलक्षणप्रतिभाशाली च लोके मृग्यः। तदुक्तं कस्यचिदिति। प्रतिभावानपि नेच्छामात्रेण सत्काव्यं कर्तुं शक्नोति। सहृदयानान्तु सुकृतपरिपाकेन तस्य प्रतिभां निमित्तीकृत्य स्वयमेव तज्जायते। तदपि जातु। श्रेयांसि हि बहुविघ्नानि। दशरथस्याजनि पुत्र इतिवत् प्रतिभावतो जायते काव्यमिति षष्ठी ॥५॥

एवं काव्यस्योपादेयत्वमदर्शि। अथ कवीन् प्ररोचयति—

उपेयुषामपि दिवं सन्निबन्धविधायिनाम्।
आस्त एव निरातङ्कं कान्तं काव्यमयं वपुः ॥६॥

जरामरणधर्मणो ह्यस्य शरीरस्य ध्रुवो विलयः। काव्यमयं पुनः कमनीयं वपुः निरपायमेव चिरमास्ते। निरपायं चिरमास्त एव च। तादृशवपुःप्रतिलम्भाय बुद्धिमता सता शरीरिणा किमिति न प्रयतितव्यम् ॥६॥

ननु दिवि सुस्थितानां किमस्मिन् लोके सताऽसता वा वपुषा। नैतदेवम्। यतः

रुणद्धि रोदसी चास्य यावत् कीर्तिरनश्वरी।
तावत् किलायमध्यास्ते सुकृती वैबुधं पदम् ॥७॥

यस्य कवेः कान्तं काव्यमयं वपुरिह देदीप्यते तस्यानिनश्वरी कीर्तिअनुबन्धः।

भवति। यावन्तं च कालमस्य कीर्तिरविनश्वरी सती द्यावाभूमी व्याप्नोति तावन्तं कालमयं सहृदयहृदयास्वाद्यब्रह्मानन्दसदृशरसामृतकुल्यायमानसत्काव्यनिर्माणसुकृतशाली कविर्विबुधानां पदं स्वर्गमध्यास्ते। तत् स्वर्गोपभोगस्थेम्नो हेतुः काव्यमयं वपुर्नानादरणीयमिति। किलेति इममर्थमितिहाससिद्धमावेदयति। अस्ति चात्रेतिहासः। इन्द्रद्युम्नो हि नाम राजर्षिः भूमावस्य कीर्तिरनंशादिति मत्वा देवैः स्वर्गान्निपातित इह मार्कण्डेयमृषिं ततोऽपि चिरजाततरं प्रावारकर्णनामानमुलूकं नाडीजङ्घाभिधानं बकं चाभिगम्य तैरप्रत्यभिज्ञातोऽन्तेऽकूपाराख्यं कूर्ममुपसृत्य तेन प्रत्यभिज्ञात उदश्रुणा स्तुतचरितश्च सन् तत्क्षणोपस्थितेन दिव्येन रथेन पुनः स्वर्गमगादितीमां कथां कथयित्वा महाभारते वनपर्वणि श्लोका अप्युदाह्रियन्ते येषामयमाद्यः--

दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः।
यावत् स शब्दो भवति तावत् स्वर्गे महीयते॥ इति ॥७॥

कविप्ररोचनामुपसंहरति--

**अतोऽभिवाञ्छता कीर्तिं स्थेयसीमा भुवः स्थितेः।**
**यत्नो विदितवेद्येन विधेयः काव्यलक्षणः॥८॥**

एवमामुष्मिकोपभोगोपयोगित्वात् काव्यजनितकीर्तेः, भूलोकस्थितिपर्यन्तं स्थिरां कीर्तिमिच्छता वेद्यं विदितवता काव्यलक्षणो यत्नः कर्तव्यः। कार्यकारणयोरभेदोपचारः काव्यरूपो यत्न इति ॥८॥

ननु किन्तद्वेद्यम्। तदाह--

**शब्दश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः।**
**लोको युक्तिः कलाश्चेति मन्तव्या काव्यवैखरी॥९॥**

शब्दो नामाख्यातादिः साधुशब्दस्वरूपमिति यावत्। छन्दः वृत्तरत्नाकराद्युक्तलक्षणं अभिधानं शब्दस्यार्थप्रतिपादनव्यापारः शक्तिलक्षणादिस्वरूपः अर्थः अस्य शब्दस्यायमेवार्थ इति अयमर्थोऽस्यैव शब्दस्य

उद्यानपत्रिका

वाच्य इति च विवेकः । महाभारतरामायणादिषु प्रतिपाद्याः कथाः, लोकः स्त्रीपुरुषादिस्वभावविशेषावस्थाविशेषादि युक्तिः, न्यायमीमांसादिरूपाणि दर्शनानि, कला गीतवाद्यादयः इत्येवमेतदष्टकरूपा, काव्यवैखरी मन्तव्या ।

उत्तुङ्गोदयस्तु लोचनव्याख्यायां 'मन्तव्याः काव्यहेतवः' इति पठति । नवकञ्चात्र निर्दिष्टं मन्यते । तत्र इतिहासाश्रयाः इतिहासेषु प्रोक्ता अंशाः, कथा लौकिक्य इति भेदेन योज्यम् । 'इतिहासस्तथा कथाः' इत्येव वा तद्दृष्टः पाठःस्यात् ॥९॥

नैतद्द्वयं विदित्वा तावतैव सन्तोष्टव्यम् । नह्येतद्वेदनमेव काव्यमार्गवेदनम् । तद्वेदनाय तु काव्यविदुपासना कर्तव्या । आचार्यवान् हि पुरुषो वेद । नापि तद्विदुपासनां कृत्वा तावतैव सन्तोष्टव्यम् । दिशं ह्याचार्याः प्रदर्शयन्ति । विद्या पुनरभियोगात् पूर्यते । तस्मादन्येषामपि निबन्धा विलोकनीयाः । अभियोगो हि नाम भूयिष्ठं लक्ष्यपरिचयः । एवं विदितवेद्येन काव्यकरणे आदरः कार्यः । तदिदमुच्यते—

शब्दाभिधेये विज्ञाय कृत्वा तद्विदुपासनम् ।
विलोक्यान्यनिबन्धांश्च कार्यः काव्यक्रियादरः ॥१०॥

अभिधेयमर्थः । पूर्वोक्तस्याष्टकस्य सङ्ग्रहेणोक्तिः शब्दाभिधेये इति ॥१०

अप्रमत्तैः कविभिर्भवितव्यमित्याह—

सर्वथा पदमप्येकं न निगाद्यमवद्यवत् ।
विलक्ष्मणा हि काव्येन दुःसुतेनेव निन्द्यते ॥११॥

दुःसुतेनेव लक्षणविरहितेन काव्येन हेतुना कविर्लोकेन निन्द्यते ॥११॥

प्रमादप्रतिषेधोत्तम्भनायैव निन्दार्थवादः—

अकवित्वमधर्माय व्याधये दण्डनाय वा
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः ॥१२॥

लोके धार्मिकमपेक्ष्य अधार्मिकस्य नीरोगमपेक्ष्य रुग्णस्य राजसम्माअनुबन्धः ।

नितमपेक्ष्य दण्डितस्य च यदन्तरं तदन्तरं कविलोके कविमपेक्ष्य अकवेः। कुकवेः पुनर्जीवन्तमपेक्ष्य मृतस्य यावदन्तरं तावदन्तरम्। अधर्माय अधर्मकृता या लोकेऽधार्मिकस्य स्थितिः तत्तुल्यस्थितय इत्येवं नेयम्। यद्वा अकवित्वमधर्माय व्यक्तवाचां हि वाचः सृष्टिः परमपुरुषं स्तोष्यन्तीति यथोचितमाह्लादनेन लोकस्योपकरिष्यन्तीति च। तत्र यदि सत्यामपि शक्तावलसमनसस्सन्तोऽकवयो भवन्ति तद्दिव्याज्ञाव्यतिक्रमादधर्माय भवति। व्याधये वा। सरसवागमृतोद्गारतोषितचेतसो हि राजानो महाकवीन् सुबहु सम्मानयन्ति। तच्चाकवयः पश्यन्तो वयमपि कथन्न कवयोऽभूमेत्याधिं भजन्ते। आधिश्च क्रमादुपचितो व्याधये भवतीति। दण्डनाय वा। यो हि शक्तो न कवित्वे प्रवर्तते स राज्ञो दण्ड्यः। यद्यपि न तथा दण्डः कदाचित् कृतः श्रूयते तथाऽपि स दण्डार्ह एव। अनधीयानन्यायात्। अथ वा यत् कवीनां गोष्ठ्यामकवेः प्रवेशो निषिध्यते तदस्य दण्डनं भवति। न हि दापनबन्धनाद्येव दण्डनम्। धिक्कारस्यापि दण्डत्वादिति। यदेतदधर्मादिरूपमनिष्टं ततोऽपि गरीयसो मरणतुल्यस्यानिष्टस्य हेतुः कुकवित्वमिति। एवंवा। प्राञ्चो हि कवयः भगवन्तं स्तुत्वा पापमपानुदन् व्याधिञ्चाशमयन्निति श्रूयते। तथा राजानमुपश्लोकयन्तो दण्डान्मुक्ता इति। अकवीनां सतामेवं कर्तुमशक्यमिति कृत्वा अधर्मायेत्येवमाद्युच्यते। के पुनः कुकवयः। तत्राहुः—

गणयन्ति नापशब्दं न वृत्तभङ्गं क्षयं न वाऽर्थस्य।
रसिकत्वेनाकुलिता वेश्यापतयः कुकवयश्च॥

अपशब्दः निन्दाशब्दः संस्कारच्युतश्च। वृत्तं शीलं छन्दश्च। अर्थो वित्तं काव्यार्थश्च। कुकविना हि दुर्घटितैः शब्दैर्व्याविद्धरूपो रमणीयोऽप्यर्थो विनश्यतीव। तदुक्तं 'क्षयं न वाऽर्थस्य' इति॥१२॥

तदेवमुक्तं काव्यस्य प्रयोजनं हेतुश्च। अथ साक्षाद्विषयं विविच्य दर्शयति—

उद्यानपत्रिका-

रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनितामुखम् ॥१.१३॥

रूपकादिरेवालङ्कारः काव्यस्यान्यैरुक्तः । नचैवं शङ्कनीयम्। यदि स्वतो न सुन्दरं तस्य किमलङ्कारेण । अथ सुन्दरं तथापि किमलङ्कारेण । तदेवमलङ्कारस्यानपेक्षणीयत्वे किन्तस्य विशेषचिन्तयेति । स्वतः सुन्दरमपि हि अलंकृतं विशेषतो भाति न तथाऽनलंकृतमिति ॥१३॥

किन्तु

रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङाञ्च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम् ॥१.१४॥

काव्यत्वानिर्वाहकादंशात् बहिर्भावो बाह्यता । सुबन्तानां तिङन्तानाञ्च विशेषेण शब्दशास्त्रसंस्काराभिव्यञ्जकतया उत्पत्तिं रचनामलंकृतिमिच्छन्ति १४

तदिदमग्राह्यम् यतः

तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।

यदेतत् सुपां तिङाञ्च व्युत्पन्नत्वं तदेतत् सौशब्द्यं नाम भवति । नालङ्कारः कश्चित् । संस्कारप्रच्युतौ हि अपशब्दः स्यात् । न चापशब्दो नाम प्रयोक्तव्यः । तथा च दोषाभावमात्ररूपा सुप्तिङ्व्युत्पत्तिर्नालङ्कार इति । अपि च सुप्तिङ्व्युत्पत्त्या का नामार्थस्य व्युत्पत्तिः शोभा विशिष्टोत्पत्तिरिति । न हि शब्दमात्रं वाक् किन्तर्हि उभयं शब्दश्चार्थश्च । तच्च नः काव्यम् । तस्मादसदेतत् ।

किन्तर्हि भवन्मतम् । उच्यते ।

शब्दाभिधेयालङ्कारभेदादिष्टं द्वयन्तु नः ॥१.१५॥

द्वयमस्माकमिष्टं शब्दालङ्कारश्चार्थालङ्कारश्च। अर्थालङ्कारो रूपकादिः। शब्दालङ्कारोऽपि न सुप्तिङ्व्युत्पत्तिरूपः। अपित्वनुप्रासयमकरूप इति वक्ष्यते ।१५।

ननु शरीरं तावत् प्रथमं काव्यस्याभिधीयतां यस्य भवता द्विविधोऽलङ्कार इष्यते । उच्यते—

अनुबन्धः ।

**शब्दार्थौ सहितौ काव्यम्**

न शब्द एव केवलः काव्यम् । नाप्यर्थ एव । किन्तर्हि । उभौ शब्दार्थौ सहितौ काव्यम् । यथाह— शब्दार्थौ काव्यम् । वाचको वाच्यं चेति द्वौ संमिलितौ काव्यम् । द्वावेकमिति विचित्रैवोक्तिः । तेन यत्केषांचिन्मतं कविकौशलकल्पितकमनीयतातिशयः शब्द एव केवलं काव्यमिति केषांचित् वाच्यमेव रचनावैचित्र्यचमत्कारकारि काव्यमिति पक्षद्वयमपि निरस्तं भवति । तस्माद् द्वयोरपि प्रतितिलमिव तैलं तद्विदाह्लादकारित्वं वर्तते । न पुनरेकस्मिन् इति ।

तद्विभज्यते । तत्र प्रथमं वर्णनियमरूपच्छन्दस्सदसद्भावाभ्यां द्वेधा विभागः—

**गद्यं पद्यं च तद्द्विधा ।**

पुनरन्यथा विभागः । शब्दो हि त्रिविधः संस्कृतप्राकृतापभ्रंशभेदात् शब्दमयं च काव्यम् । तेन तत्त्रैविध्यात् काव्यं त्रिविधं भवति—

**संस्कृतं प्राकृतं चैतदपभ्रंश इति त्रिधा ॥१६॥**

एतत् काव्यं, संस्कृतं प्राकृतं अपभ्रंश इति त्रिधा च भवतीति योज्यम् । शरीरशरीरिणोरभेदोपचारात् शब्दमात्रवाचिनां संस्कृतादिपदानां काव्यसामानाधिकरण्यम् ॥१६॥

पुनरप्यन्यथा विभागः । काव्यप्रतिपाद्यं हि वस्तु चतुर्धा भवति। देवानां राजर्षीणां च चरितं वृत्तत्वेनेतिहासपुराणेषु प्रसिद्धम् । कविना स्वयमेव कल्पितम् । सङ्गीतादिकलारूपम् । भट्टिकाव्यवत् शब्दानुशासनादिशास्त्ररूपमिति । तदेतदनुसृत्य पुनश्चतुर्धा काव्यं भिद्यते—

**वृत्तदेवादिचरितशंसि चोत्पाद्यवस्तु च ।**
**कलाशास्त्राश्रयं चेति चतुर्धा भिद्यते पुनः ॥१७॥**

एतदिति वर्तते ।

उद्यानपत्रिका-

अत्र प्रतिहारेन्दुराजीये शङ्कासमाधाने— तदेवं गुणसंस्कृतशब्दार्थशरीरत्वात् सरसमेव काव्यम् । यद्येवं गुणशून्यत्वान्नीरसे व्याकरणादौ भरतादौ च काव्यव्यपदेशो न प्राप्तः । ततश्च नृत्तदेवादिचरित .... .... इति भामहोदितं विरुध्यते । अत्र हि कलाश्रयशब्देन भरताद्यभिहितम् । शास्त्राश्रयशब्देन च व्याकरणादि । अतो वक्तव्यमेतत् कथं तत्र काव्यव्यपदेश इति । उच्यते । मुख्यया तावद्वृत्त्या गुणसंस्कृतशब्दार्थशरीरमेव काव्यम् । गुणरहितशब्दार्थशरीरं तु वाक्यमात्रे काव्यशब्दस्य काव्यसादृश्यादुपचारात् प्रयोगो भविष्यति-- इति ॥१७॥

पुनरपि चान्यथा विभागः सन्दर्भाल्पत्वमहत्त्वादिपर्यवसायिकविव्यापारवैलक्षण्यात्—

सर्गबन्धोऽभिनेयार्थं तथैवाख्यायिकाकथे ।
अनिबद्धं च काव्यज्ञैस्तत् पुनः पञ्चधोच्यते ॥१८॥

'काव्यादि' इति पाठोऽनन्वितः । काव्यज्ञैरिति युक्तं भवितुम् । अनिबन्धमित्यपि पाठः ॥१८॥

एवं द्विधा त्रिधा चतुर्धा पञ्चधा चेति चतुर्विधो विभागः । तत्र विभागान्तरेषु विभागवचनादेव तत्तत्स्वरूपावगतेर्न पृथक् लक्षणापेक्षा । अन्तिमे तु विभागे तदपेक्ष्यते । तत्र किंलक्षणः सर्गबन्धः । तदुच्यते—

सर्गबन्धो महाकाव्यं महतां च महच्च यत् ।
अग्राम्यशब्दमर्थ्यं च सालङ्कारं सदाश्रयम् ॥१९॥
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैश्च यत् ।
पञ्चभिः सन्धिभिर्युक्तं नातिव्याख्येयमृद्धिमत् ॥२०॥
चतुर्वर्गाभिधानेऽपि भूयसाऽर्थोपदेशकृत् ।
युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक् ॥२१॥

उत्तमकवियशःकामानामत्र दृष्टिमाकर्षन् प्रथमं स्तौति महाकाव्यमिति । एवंभावे निमित्तमाह महतां च महच्च यदिति । मनुष्याणां हि सारभूतः अनुबन्धः ।

वाक् । तत्र महान्ति कवीनां वाङ्मयानि । तेषां महतामपि मध्ये सर्गबन्धात्मकं काव्यं महत् । न चात्र सन्देग्धव्यम् । महच्च महदेव । यद्वा यत् महतां च वाल्मीकिकालिदासप्रभृतीनां महाकवीनां संबन्धि च । यत्रैव तादृशा महाकवयः प्रावर्तन्तेत्यर्थः । महच्च स्वरूपेण काव्यान्तरापेक्षया महच्चेति द्रष्टव्यम् । अथ लक्षणमुच्यते । अग्राम्यशब्दं शब्ददोषवर्जितम् । यद्वा औचित्यशालि । अर्थ्यं सर्थादनपेतम् । अपार्थाद्यर्थदोषवर्जितम् । न च दोषपरिहारमात्रेण काव्यं भवति । किन्तु सालङ्कारम् । अलङ्कारो वक्ष्यमाणलक्षणः । न चादोषमपि सालङ्कारमपि नीचनायकं काव्यं शोभते । किन्तु सदाश्रयं सत्पुरुषविषयम् । शिशुपालवधवत् मन्त्रणेन दूतप्रेषणेन प्रयाणेन युद्धेन नायकजयेन च युक्तम् । दशरूपाद्युक्तलक्षणैः मुखप्रतिमुखादिभिः पञ्चभिः सन्धिभिश्च युक्तम् । नातिव्याख्येयम् । अतिव्याख्येयत्वे हि शास्त्रग्रन्थवदरुचये स्यात । ऋद्धिमत् ऋतुसन्ध्यारात्रिचन्द्रोदयादीनां विवाहसम्भोगपुष्पावचयजलक्रीडारतिपुत्रजननादीनां च वर्णनैः प्रचुरम् । 'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च' इत्युक्तरीत्या चतुर्वर्गप्रतिपादकत्वेऽपि भूम्ना हितोपदेशकारि । अर्थो हितम् । युक्तं लोकस्वभावेन न तु लोकातिक्रान्तरूपेण । यथाह— लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः । योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे जना इति । सकलैः रसैश्च युक्तम् । न त्वेकेनैव रसेन । तैश्च कथंभूतैः । पृथक् । असंकीर्णवृत्तिभिरित्यर्थः । एकत्र यस्यकस्यचिदेकस्य प्राधान्यं इतरेषामङ्गत्वं इत्यविरोधेन मिथ उपकार्योपकारकभावेन विनिवेशितैः न तु पुनरेकत्रैव समप्राधान्येन द्वाभ्यां बहुभिर्वा निवेशितैरिति । यत् महतां चेत्याद्युक्तरूपं तन्महाकाव्यं सर्गबन्ध इत्यन्वयः ॥१९, २०, २१ ॥

अस्मिंश्च महाकाव्ये

> नायकं प्रागुपन्यस्य वंशवीर्यश्रुतादिभिः ।
> न तस्यैव वधं ब्रूयादन्योत्कर्षाभिधित्सया ॥२२॥

उद्यानपत्रिका-

श्रुतं विद्या । आदिना शीलगुणाः ॥२२॥

नन्वाधिकारिकनायकस्य वधवर्णनं तावदनुचितम् । स हि आनिर्वहणसन्धि अनुवर्तमानः मुखे प्रस्तुतस्यारम्भस्य यत् फलं तद्भागितयाऽभ्युदयभाक् भवति । न चाभ्युदये वर्णनीये वधवर्णनमुचितम् । यःपुनः प्रासङ्गिकनायकः तस्य कथाशरीरव्याप्त्यभावात् अत एवाभ्युदयभाक्त्वावश्यम्भावविरहात् नास्ति किञ्चिदनौचित्यं यदि वधो वर्ण्येत । उच्यते—

यदि काव्यशरीरस्य न स व्यापितयेष्यते ।
न चाभ्युदयभाक् तस्य मुधाऽऽदौ ग्रहणं स्तवे ॥२३॥

स्तवे ग्रहणं स्तुत्यर्थं ग्रहणम् । आधिकारिकनायकस्तवो हि काव्यस्य शोभायै । वध्यस्य तु प्रासङ्गिकनायकस्य स्तवेन का तस्य शोभा । तज्जयान्नायकोत्कर्ष इति चेन्न । अभिप्रायापरिज्ञानात् । न ह्यत्र प्रतिनायकस्य रिपोर्वधः स्तवो वा निषिध्यते । किन्तर्हि । प्रासङ्गिकस्य उपनायकस्य । अभ्युदयभाज आधिकारिकस्य वधवर्णनमनुचितम् । वध्यस्योपनायकस्य वंशवीर्यश्रुतशीलगुणैरतिस्तुतिरफला । प्रतिनायकं प्रति तु नात्र किञ्चिदुच्यते इति सर्गबन्धः ॥२३॥

अथाभिनेयार्थम्—

नाटकं द्विपदीशम्यारासकस्कन्धकादि यत् ।
उक्तं तदभिनेयार्थम्

नाटकं रूपकम् । यत् द्विपद्यादिरूपं रूपकं तदभिनेयार्थमुक्तमिति ।

तस्य तु लक्षणमिह नोच्यते । यस्मात्

उक्तोऽन्यैस्तस्य विस्तरः ॥२४॥

तस्य अभिनेयार्थस्य विस्तरः तदवान्तरप्रभेदतदङ्गतल्लक्षणादिरूपः भरतादिभिरुक्त इति ॥२४॥

अथाख्यायिका—

संस्कृताऽनाकुलश्रव्यशब्दार्थपदवृत्तिना ।

अनुबन्धः ।

**गद्येन युक्तोदात्तार्था सोच्छ्वासाऽऽख्यायिका मता ॥२५॥**

पदवृत्तिः शक्तिलक्षणारूपा । यथासंभवमनाकुलाः श्रव्याः शब्दार्थपदवृत्तयो यस्मिन् तथाविधेन गद्येन अपादपदसन्तानेन युक्ता । शब्दस्य श्रव्यत्वं माधुर्यम् । अर्थस्य विड्वर्चःप्रभृतिवत् श्रुतिदुष्टत्वशून्यत्वम् । अनाकुलत्वं शब्दस्य झटिति प्रत्यायकत्वम् अर्थस्य तथा प्रतीयमानत्वम् । प्रसाद इति यावत् । पदवृत्तेरनाकुलत्वं तु हिमापहामित्रधरादिपदवृत्तिवैलक्षण्यम् । उदात्तार्था उत्तमपुरुषचरितविषया । सोच्छ्वासा अवान्तरप्रकरणसमाप्तौ उच्छ्वाससंज्ञा यत्र भवति तादृशी । संस्कृता संस्कृतभाषानिबद्धा । अत्र 'प्रकृत' इत्यादिरपपाठः यदेतदनुसारी हेमचन्द्र आह— नायकाख्यातस्ववृत्ता भाव्यर्थशंसिवक्त्रादिः सोच्छ्वासा संस्कृता गद्ययुक्ताऽऽख्यायिकेति ॥२५॥

किंच

**वृत्तमाख्यायते तस्यां नायकेन स्वचेष्टितम् ।**
**वक्त्रं चापरवक्त्रं च काले भाव्यर्थशंसि च ॥२६॥**

तस्यामाख्यायिकायां नायकेनैव स्वचेष्टितमाख्यायते न कविनाऽन्येन वा। तच्च चेष्टितं वृत्तं वस्तुतो भूतम् । स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिन इति भावः । तस्यां स्वकाले भविष्यतोऽर्थस्य प्रतिपादके वक्त्रापरवक्त्रे च भवतः । छन्दोन्तरस्यापीदमुपलक्षणमिति केचित् । प्रथमचकारौ इतरेतरयोगार्थौ । अन्त्यः पूर्वेण समुच्चयार्थः ॥२६॥

किञ्चेयमाख्यायिका

**कवेरभिप्रायकृतैरङ्कनैः कैश्चिदङ्किता ।**
**कन्याहरणसङ्ग्रामविप्रलम्भोदयान्विता ॥२७॥**

यथा माघभारविप्रभृतयः श्रीलक्ष्म्यादि चिह्नं कुर्वन्ति तथा कृतैः कैश्चिच्चिह्नैश्चिह्निता भवति । कन्याहरणादिवर्णनपरा च भवति । ननूभयमपीदं सर्गबन्धसाधारणम् । सत्यम् । किन्तु तत्र स्याद्वा न वा । अत्र तु स्यादेवेति । कथनैरित्यपपाठः । अङ्कनैरिति क्वचिदुपलब्धः पाठः ॥२७॥

उद्यानपत्रिका-

अथ कथा —

न वक्त्रापरवक्त्राभ्यां युक्ता नोच्छ्वासवत्यपि ।
संस्कृताऽसंस्कृता चेष्टा कथाऽपभ्रंशभाक्तथा ॥२८॥

असंस्कृता प्राकृतनिबद्धा । 'प्राकृता' इत्येव तु युक्तः पाठः ॥२८॥

किंच

अन्यैः स्वचरितं तस्यां नायकेन तु नोच्यते ।
स्वगुणाविष्कृतिं कुर्यादभिजातः कथं जनः ॥२९॥

अन्यैः कविना तत्कल्पितैरितरैर्वा । न तु नायकेनोच्यते । तदिह यदाह दण्डी 'अन्या नायकेनेतरेण वा' इति तदमूलम् । अन्यादृशेन वा पाठेन भाव्यम् । न वक्त्रापरवक्त्राभ्यामित्यादि विशेषप्रतिषेधात् इतरप्राप्त्या गद्ययुक्ता कथेति दण्डी । प्रतिषेधस्यैव नियमस्याप्यकरणात् गद्येन पद्येन वेति हेमचन्द्रः ॥२९॥

अथानिबद्धम् —

अनिबद्धं पुनर्गाथाश्लोकमात्रादि

गाथा प्राकृतमयी । श्लोकः संस्कृतमयः । मात्रार्थे एकत्वम् । आदिना कुलकादि गृह्यते । सर्गबन्धादिवन्महावाक्यार्थपर्यवसायितया निबन्धाभावादनिबद्धता ।

न चैतन्मन्तव्यं यस्मादस्य सर्गबन्धादिवन्न महावाक्यार्थपर्यवसायिता तस्मादलङ्कारनियमो नास्तीति । जीवितं हि काव्यस्यालङ्कारः । स चेन्न स्यात् काव्यमेव न स्यात् । तदुच्यते ।

तत् पुनः ।

युक्तं वक्रस्वभावोक्त्या

तदनिबद्धं पुनः वक्रोक्त्या स्वभावोक्त्या च युक्तमेव भवति । 'भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्' । तद्वक्ष्यते । यदि पुनर्न वक्रोक्तिःस्यात् न वा स्वभावोक्तिः तन्न काव्यम् । वार्ता तु सा । यथा —

अनुबन्धः ।

भोजनं देहि राजेन्द्र घृतसूपसमन्वितम् ।
गोरपत्यं बलीवर्दस्तृणान्यत्ति मुखेन सः ॥ इत्यादि ।

य एते काव्यस्य प्रभेदाः सर्व एव तेऽस्माभिरिष्यन्ते । न यः कोऽपि प्रभेदोऽनभिमत इति प्रतिषेद्धव्यः । तदिदमुच्यते

सर्वमेवैतदिष्यते ॥३०॥

किमर्थमिदमुच्यते । अप्रतिषेधादेवेदं विज्ञायते सर्वमेवेष्यते इति । सत्यं एवमेतत् । किन्तु, एतत् सर्वमिष्यते नत्वेतदतिरिक्तं प्रकारान्तरमिष्यत इत्यभिप्रायः ॥३०॥

किं तादृशस्य प्रकारान्तरस्य क्वचिदस्ति सम्भावना यदिह नेष्यते। बाढमस्ति । तथाहि—

वैदर्भमन्यदस्तीति मन्यन्ते सुधियोऽपरे ।

न परमस्तीत्येतावदेव मन्यन्ते । अपि तर्हि अस्मदुक्तविधस्य काव्यस्य गौडीयमिति नाम कृत्वा एतदपेक्षया वैदर्भं ज्याय इत्यपि भणन्ति । इद-मुच्यते—

तदेव च किल ज्यायः सदर्थमपि नापरम् ॥३१॥

किलेत्युपहसति । अलीके वा । अपरं अस्मदुक्तविधं तैर्गौडीयमिति कृत-संज्ञम् । अर्थस्य सत्त्वमलंकृतत्वम् । अनेन सर्वा काव्यसामग्र्युपलक्षिता। उपहासबीजमिदमुपदर्शितम् ॥३१॥

य एवं मन्यन्ते ते प्रष्टव्याः प्रतिबोधनीया वा—

गौडीयमिदमेतत्तु वैदर्भमिति किं पृथक् ।

किमिति कुत इत्यर्थे । पृथक्त्वे को हेतुरित्यर्थः । यद्वा किमित्याक्षेपे । न पृथगित्यर्थः ।

कथं तर्हि इदं गौडीयं एतत्तु वैदर्भमिति पृथगाख्यायते । उच्यते—

गतानुगतिकन्यायान्नानाख्येयममेधसाम् ॥३२॥

गतमनु गतिर्यस्य स गतानुगतिकः । प्रथमं कश्चिद्भ्रान्त एवमाह । तदेव

उद्यानपत्रिका-

पश्चात्कालिका अप्यनुवदन्ति । न तु स्वयं विविञ्चन्ति । कस्मात् । यस्मादमेधसः । तदिह वस्तुतो नास्ति वैलक्षण्यम् ॥३२॥

आह—

**ननु चाश्मकवंशादि वैदर्भमिति कथ्यते ।**

न च नियामकं वैलक्षण्यमन्तरा नियतो व्यवहारो घटते । अस्ति च व्यवहारः । तेन पश्यामः अस्ति वैलक्षण्यमिति । किमिदमश्मकवंशादीति । तन्न बुध्यामहे । एवं तु सम्भाव्यते । अश्मकाभिधानो देशः । तस्य राजाऽप्यश्मकः । तस्य वंशः । तमधिकृत्य कृतं काव्यं अश्मकवंशः रघुवंश इव । तदादीति ।

अत्रोच्यते—

**कामं तथाऽस्तु प्रायेण संज्ञेच्छातो विधीयते ॥३३॥**

कामं कस्यचित् वैदर्भमिति व्यवहारोऽस्तु । न हि वयं तथा व्यवहारो नास्तीति ब्रूमः । किन्तर्हि । तत्संज्ञं विलक्षणं काव्यं नास्तीति । असति स्वरूपवैलक्षण्ये व्यवहारवैलक्षण्यं कथमिति चेत् पृच्छ लोकं य इच्छया संज्ञां विदधाति नार्थं कञ्चनाभिप्रेत्य । दुर्गतोऽपि हि पुत्रस्य सार्वभौम इति संज्ञां करोति । न च तत्रार्थान्वयः कश्चित् ॥३३॥

नन्वयमस्ति विशेषो गौडीयाद्वैदर्भस्य । तन्त्रीनिनादसुभगपदबन्धं हि वैदर्भम् । न तथा गौडीयमिति । उच्यते । अर्थगाम्भीर्यालङ्काराभ्यां हि काव्यस्य काव्यता । तदुभयं वैदर्भेऽस्ति न वा । नास्ति चेत्

**अपुष्टार्थमवक्रोक्ति प्रसन्नमृजु कोमलम् ।**
**भिन्नं गेयमिवेदं तु केवलं श्रुतिपेशलम् ॥३४॥**

अपुष्टार्थं अगम्भीरार्थं अत एव प्रसन्नं कविप्रतिभाजनितरसोपस्काररहितं अवक्रोक्ति अलङ्कारशून्यं अत एव ऋजु पामरसाधारणवार्तातुल्यं एवं काव्यजीविताविकलमपि कोमलं ललितपदबन्धं इदं तु वैदर्भं विलक्षणं गेयमिव केवलं श्रवणमधुरम् न तु प्रीतिहेतुभूतविशिष्टशब्दार्थमयकाव्यअनुबन्धः ।

व्यपदेशनिदानशोभाशालि । तथा च काव्यत्वमेव नास्तीति कुतस्तद्विशेषता । गेयं गीतिप्रधाना पदरचना ॥३४॥

अथास्ति चेत्

**अलङ्कारवदग्राम्यमर्थ्यं न्याय्यमनाकुलम् ।**
**गौडीयमपि साधीयो वैदर्भमिति नान्यथा ॥३५॥**

अग्राम्यं अनौचित्यवर्जितं अर्थ्यं पुष्टार्थं अर्थदोषशून्यं च न्याय्यं लोकशास्त्राविरुद्धं अनाकुलं प्रसादमाधुर्यवत् एवंविधं सद्गौडीयमपि साधीयः शास्त्रादिशब्दान्तरेभ्यः साधुतरमेव । विशिष्टं काव्यमेवेत्युक्तं भवति । वैदर्भमिति यदुच्यते तदपि नानेवंलक्षणं भवितुमर्हति । काव्यत्वहानेः । एवं लक्षणत्वे तु गौडीयमिदमेतत्तु वैदर्भमिति किं पृथक् ।

नन्वलंकृतशब्दार्थं वैदर्भमपि संमतम् ।
गौडीयमिव तेनैतदपि काव्यमिति स्थितम् ॥१॥
तथापि तु द्वयोरस्ति महदन्तरमेतयोः ।
एकत्र कोमलो बन्धः परत्र परुषस्तु सः ॥२॥
गद्यपद्यात्मना यद्वत् काव्यभेदोऽभिधीयते ।
तद्वत्तेन विशेषेण किं न भेदोऽभिधीयताम् ॥३॥
नैतदेवं विशेषो हि देशभेदेन कश्चन ।
सर्वत्र सुवचो वाचां काव्यं किं तेन भिद्यते ॥४॥
ओमित्येवं ब्रुवाणस्य प्रत्यक्षं हि विरुध्यते ।
देशानामत्र या सङ्ख्या न हि सा काव्यपद्धतेः ॥५॥
तेन देशान्तरख्या यथा काव्यस्य नेष्यते ।
तथा विदर्भगौडाभ्यामपि प्रख्या न युज्यते ॥६॥
तथापि परुषत्वेन कोमलत्वेन चास्ति यः ।
भेदस्तदनुसारेण विभागोऽत्र न दुष्यति ॥७॥
इति चेत् सत्यमेवैतत् किं त्वेतादिह चिन्त्यताम् ।

उद्यानपत्रिका

नैकरूपं हि पारुष्यं सर्वत्र समवस्थितम् ॥ ८ ॥
तथा कोमलताऽप्यस्ति नैकरूपा हि सर्वतः ।
किन्त्वाकृतिस्वरादीनि भिद्यन्ते प्रतिपूरुषम् ॥ ९ ॥
यथा तथैव भिद्यन्ते वाचां मार्गाः परस्परम् ।
बन्धा हि परुषाः केचिदपरे कोमलस्तथा ॥१०॥
अपि चात्र भवन्त्यन्ये बन्धाः परुषकोमलाः ।
न हि सर्व्वानिमान् वक्तुमनन्तोऽपि प्रगल्भते ॥११॥
तेन वर्ज्यतया काव्ये पारुष्यं वाच्यमत्र तु ।
तच्च श्रुतिकटुत्वेन ह्युत्तरत्राभिधास्यते ॥१२॥
दोषावहं न यत् काव्ये पारुष्यमितरत्तु वा ।
तदस्तु काव्यबन्धेषु कामं यादृशतादृशम् ॥१३॥
व्यर्था तदनुसारेण काव्यभेदस्य देशना ।
त्रिभागं तेन काव्यस्य नाद्रियामह ईदृशम् ॥१४॥
केचिदोजोऽभिधित्सन्त इति यत् कथयिष्यते ।
तेन वा सूचितं ज्ञेयमीदृशं काव्यभेदनम् ॥१५॥

न च ललितपदबन्धानुरागशालिभिरत्र तदनादरमवलोक्य विमनायितव्यम् । यतः

**न नितान्तादिमात्रेण जायते चारुता गिराम् ।**

किन्तु,

**वक्राभिधेयशब्दोक्तिरिष्टा वाचामलंकृतिः ॥३६॥**

किमिदं नितान्तादिमात्रेणेति । तन्न बुध्यामहे । पाठान्तरेण तु भाव्यम् । स्थितन्त्वेवं नेतव्यम् । वक्ष्यमाणानुप्रासविशेषोपस्थापनद्वारेण नितान्तादीति बन्धकोमलत्वमिह लक्षयति । श्रुतिपेशलत्वसम्पादकेन बन्धस्य कोमलत्वमात्रेण काव्यव्यपदेशोचिता चारुता गिरां न जायते । वक्रयोरभिधेयशब्दयोर्घटना तु वाचामलंकृतिः । का शब्दस्य वक्रता । अनुबन्धः ।

अनुप्रासादिमत्ता । अथ स्वभावोक्तिरलंकृतिर्न स्यात् । वक्राभिधेया-भावात् । नेत्युच्यते । स्वभावोक्तिरपीहोपलक्षिता ज्ञेया । भूयांसो हि वक्रोक्त्यलङ्काराः । एकधैव तु स्वभावोक्तिर्वक्ष्यते । तस्माद्वक्रोक्त्यभिधा-नम् । न चात्र स्वभावोक्तिपरिसङ्ख्या गम्यते । बन्धकोमलत्वमात्रपरिस-ङ्ख्यानात् । यद्वा स्वभावोक्तिरपि वक्रोक्तिरेव । ननु विप्रतिषिद्धमिदमभि-धीयते स्वभावोक्तिरपि वक्रोक्तिरेवेति । 'भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्ति-श्चेति वाङ्मयम्' इति हि स्थितम् । न । नास्ति विप्रतिषेधः । वार्तावैल-क्षण्यं हि वक्रत्वं नाम । तद्यथा वार्तायामविद्यमानस्यानुप्रासादेर्घटनया शब्दस्य वक्रत्वं उपमादेर्निवेशेन चाभिधेयस्य तथा वक्ष्यमाणेन वस्तु-नस्तदवस्थत्वेनाप्यभिधेयस्य वार्तावैलक्षण्याद्वक्रत्वं वेदितव्यम् । आह च कुन्तकं निरस्यन् हेमचन्द्रः—अयमर्थः । कविप्रतिभया निर्विकल्पप्रत्य-क्षकल्पया विषयीकृता वस्तुस्वभावा यत्रोपवर्ण्यन्ते स जातेर्विषयः । एवञ्च

अलङ्कारकृतां येषां स्वभावोक्तिरलंकृतिः ।
अलङ्कार्यतया तेषां किमन्यदवशिष्यते ॥

इति यत् कैश्चित् प्रतिपादितं तन्निरस्तमेव । वस्तुनो हि स्वभावो लौकि-कोऽर्थोऽलङ्कार्यः । कविप्रतिभासंरम्भविशेषविषयस्तु लोकोत्तरार्थोऽलङ्करण-मिति । तथाचाह—

उच्यते वस्तुनस्तावद्द्वैरूप्यमिह विद्यते ।
तत्रैकमन्यसामान्यं यद् विकल्पैकगोचरः ॥
स एव सर्वशब्दानां विषयः परिकीर्तितः ।
अत एवाभिधीयन्ते सामान्यं बोधयन्त्यमी ॥
विशिष्टमस्य यद् रूपं तत् प्रत्यक्षस्य गोचरः ।
तदेव सत्कविगिरां गोचरः प्रतिभाभुवाम् ॥
रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः ।
क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः ॥

स हि चक्षुर्भगवतस्तृतीयमिति गीयते ।
येन साक्षात्करोत्येष भावांस्त्रैकाल्यवर्तिनः ॥
अस्य स्वभावस्योक्तिर्या साऽलङ्कारतया मता ।
यतः साक्षादिवाभान्ति तत्रार्थाः प्रतिभार्पिताः ॥
सामान्यस्तु स्वभावो यः सोऽन्यालङ्कारगोचरः ।
श्लिष्टमर्थमलङ्कर्तुमन्यथा को हि शक्नुयात् ॥
वस्तुमात्रानुवादस्तु पूरणैकफलो हि यः ।
अर्थदोषः स दोषज्ञैरपुष्ट इति गीयते ॥ इति ।

अन्यसामान्यं व्यक्त्यन्तरसाधारणम् । विकल्पः सविकल्पकं प्रत्यक्षम् । श्यामलं बोधयन्त्यलम् इत्युपलभ्यमानः पाठोऽनुपपन्न इति सामान्यं बोधयन्त्यमी इति न्यवेशि । सामान्यविषयत्वादेव अमी सामान्यं बोधयन्तीति सर्वे शब्दा अभिधीयन्त इति योज्यम् । विशिष्टं व्यक्त्यन्तरासाधारणम् । अस्य वस्तुनः । प्रत्यक्षस्य निर्विकल्पकस्य । सर्वं प्रत्यक्षं निर्विकल्पकमिति केचिन्मन्यन्ते । तेन केवलप्रत्यक्षाभिधानम् । का प्रतिभा नाम । तदाह रसेति । प्रतिभां स्तौति सा हीति । एषः भगवान् । अस्य प्रतिभागोचरस्य विशिष्टस्य । स्वभावोक्तेः प्रयोजनमाह यत इति । अलङ्कारान्तरविवेकमाह सामान्यस्त्विति । वस्तुनः सामान्यस्वभावोक्तिरूपा उपमादयोऽन्येऽलङ्काराः विशिष्टस्वभावोक्तिरूपस्तु स्वभावोक्त्यलङ्कार इति । अलङ्कारान्तरप्रयोजनमाह श्लिष्टमिति । उपमादीनामभावे काव्यवस्तुतया घटितमर्थमलङ्कर्तुं कः शक्नुयादिति । इष्टमिति तु युक्ततरम् । इष्टमर्थं हि लोके सुविदितमपि सुकविरुपमादिभिर्नवमिव कुर्वन्नलङ्करोति नान्यथेति । तस्माद्यत्रोभयं नास्ति वक्रोक्तिश्च स्वभावोक्तिश्च तद्ध्यदकाव्यं भवति न यत्रोपमाद्यभावेऽपि स्वभावोक्तिरस्ति तदपि । तदुच्यते वस्तुमात्रेति ।

तस्मात् स्थितं तावदेतत् यद् वार्तावैलक्षण्यात् स्वभावोक्तिरपि

अनुबन्धः ।

वक्रोक्तिप्रभेद एवेति । कथं तर्हि भिन्नं द्विधेति । अत्रैव च युक्तं वक्रस्वभावोक्त्येति । न हि सामान्यविशेषयोर्विभागः । अन्यथा घटः पृथिवी नदी आप इति द्रव्यं विभज्येत । न चैवमस्ति । उच्यते । द्वौ वक्रोक्तिशब्दौ । एकस्तावदुभयमाचष्ट स्वभावोक्तिं च उपमादिकञ्च । वार्तावैलक्षण्यरूपस्य वक्रतासामान्यस्योभयत्र भावात् । अपरः पुनः यः स्वभावोक्त्यपेक्षयाऽलङ्कारान्तरेषु विद्यमानः वक्रताविशेषस्तन्निमित्तीकृत्य केवलमलङ्कारान्तराण्याचष्ट न स्वभावोक्तिम् । अस्ति ह्येवमेकरूप एव शब्दः सामान्यस्य विशेषस्य चाभिधानेन द्वेधा विद्यमानः । यथा मृगशब्दः । स हि चतुष्पात्सामान्यमभिदधाति हरिणं च । वादशब्दश्च । स हि कथासामान्यमाह वीतरागकथारूपं विशेषं च । तदुक्तं भगवता वेङ्कटनाथेन श्रीन्यायपरिशुद्धौ— सा द्विधा वीतरागकथा विजिगीषुकथा चेति । पूर्वा वाद इति सामान्यशब्देनैव विशेषतोऽपि निर्दिश्यते.... इति । तद्वत् प्रकृतेऽपि । सति चैवं, विभागवचने विशेषवाची शब्दो ग्राह्यः । अन्यत्र सामान्यवाची । प्रकृते चैवमिति न कश्चिद्दोषः ॥३६॥

वक्राभिधेयोक्तिरलङ्कार इत्युक्तम् । तत्र कानिचन वक्राणि हेयानि । कानि तानि । तदुच्यते—

नेयार्थं क्लिष्टमन्यार्थमवाचकमयुक्तिमत् ।
गूढशब्दाभिधानं च कवयो न प्रयुञ्जते ॥३७॥

तत्र

नेयार्थं नीयतेऽनुक्तो यस्यार्थः कृतिभिर्बलात् ।
शब्दन्यायानुपारूढः कथञ्चित् स्वाभिसन्धिना ॥३८॥

यस्य वाक्यस्यावश्यवक्तव्यः कश्चिदर्थः पदेनानभिहित एव सन् बलादुन्नीयते तद्वाक्यं नेयार्थम् । व्यङ्ग्यं हि स्वयं झटिति कृतिनां प्रतीयते न पुनरुन्नीयते । 'यश्च निम्बं परशुना' इत्यादौ तु सत्यमनुक्त एवार्थ उन्नीयते छिनत्तीत्यादिः तथापि न बलात् । ननु च सुतायवदानस्योद्देश्यवि-

उद्यानपत्रिका-

शेष उन्नीयते। विश्वजितश्च फलम् । न चायं वाक्यस्य दोषः । सत्यम् । किन्तु सोऽर्थः शब्दन्यायोपारूढः । अस्ति ह्ययं शब्दस्य न्यायः यदयं श्रुतः स्वार्थमभिदधानः यमर्थमन्तरा स्वार्थो नोपपद्यते तमप्याक्षिपतीति । अत एवोच्यते सामर्थ्यं शब्दैकदेश इति । तस्माद्युक्तं यदुद्देश्यविशेषः फलं च कल्प्यते । न हि स्रुवकरणकमवदानं श्रुतं द्रवेतरद्रव्यस्य युज्यते विश्वजितश्च फलमन्तरा श्रुतं विधेयत्वमिति सामर्थ्यसत्त्वात् । यत्र त्वेवं सामर्थ्यं नास्ति स शब्दन्यायानुपारूढोऽर्थः । तस्योन्नयनं दोषावहमिति। यदि न वचनं नापि न्यायः कथं तमर्थं बुद्धिमन्तोऽप्युन्नयन्ति । स्वाभिसन्धिना असत्येव तात्पर्यग्राहके स्वाभिप्रायमात्रेण कल्पयन्ति । तदपि कथञ्चित् महता क्लेशेन । नीयते युक्त इति पाठः कथञ्चिद्योज्यः । अनुक्त इति तु युक्ततरमिति तमेव पाठमचीक्लृपाम । वचनाद्विनेति हि वक्ष्यति ॥३८॥

इदमुदाह्रियते—

मायेव भद्रेति यथा सा चासाध्वी प्रकल्पना ।
वेणुदाकेरिति च तां नयन्ति वचनाद्विना ॥३९॥

मायेव भद्रेति यथा यादृशं तादृशं नेयार्थमिति योजना। एवं सर्वत्र। सैषा वाक्यरचनाऽसाध्वी । न हि का भद्रा कस्य सा मायेवेति किञ्चिदत्र प्रतीयते । तथासति शब्दत उपादानमन्तरेणैव वेणुदाकेर्भद्रा मायेवेति तां प्रकल्पनामुपपादयन्ति । वेणुदाकिः कस्यचित् प्रबन्धस्य नायकः । भद्रा नायिका । सा तस्य मायेवाभूत् । तथाऽमूमुहदिति । तत्र कथानायकस्योपादानं विना भद्रा मायेवेत्येतावन्मात्राभिधाने नार्थो बुध्यते । तत्र वेणुदाकेरित्ययमर्थ उन्नेतव्य इति नेयार्थमिदम् । तद्यथा खुरक्षुण्णनागासृग्लोहितादिति वक्तव्ये लोहितादित्येतावन्मात्राभिधाने नेयार्थमिति दण्डिनोक्तं तादृगिदं द्रष्टव्यम् । सोऽयमस्मदुपज्ञमर्थः । अस्मद्द्वितीयमीमांसागुरवः सर्वशास्त्रविदो महामहोपाध्यायश्रीकुप्पुस्वामिशास्त्रिपादास्तु वेणुः अनुबन्धः ।

सूर्यः दाक्रिश्चन्द्रः दकस्योदकस्यापत्यत्वात् । यस्य चन्द्र एव सूर्यः तापकरत्वात् स विरही वेणुदाक्रिः तस्य भद्रा प्रेयसी मायेव । यद्वा सूर्य एव दाक्रिः पद्मः यस्य स आकाशो वेणुदाक्रिः । तस्य गङ्गा मायेव । यद्वा वेणु दाक्रिर्भगवान् कृष्णः । तस्य स्वसा सुभद्रा मायेवेति व्याचक्षते ।३९।

अथ क्लिष्टान्यार्थे—

**क्लिष्टं व्यवहितं वित्तेरन्यार्थं विगमे यथा ।**
**विजह्रुस्तस्य ताः शोकं क्रीडायां विकृतं च तत् ॥४०॥**

व्यवहितं विवक्षितादर्थात् पूर्वं प्रतीतेनार्थान्तरेणान्तरितम् । अस्योदाहरणं विजह्रुस्तस्य ताः शोकमिति । अत्र विजह्रुरिति जह्रुरित्यर्थे । कर्मनिर्देशात । सोऽयमर्थो वाक्यप्रमाणकः । पदान्तरसमभिव्याहारसापेक्षप्रतीतिकत्वात् । ततः पूर्वन्तु विपूर्वस्य हरतेः क्रीडार्थत्वात पदश्रुत्येव क्रीडाप्रत्ययो भवति । तेनेह वाच्यवाचकयोर्व्यवधानात् क्लिष्टत्वमिति । तथा च ये इह क्लिष्टावाचके ते एव अवाचकाक्लिष्टे इति विपर्यासेनोदाहरन् मम्माटानुसारी हेमचन्द्रः क्लिष्टलक्षणमाह व्यवहितार्थप्रत्ययजनकत्वं क्लिष्टत्वमिति । अवाचकं चोदाजहार अत्र दधदित्यर्थे विदधदित्यवाचकमिति ।

एवं विवक्षितार्थवित्तेर्व्यवधानेनापि सम्भवे क्लिष्टम् । यत्र तु तद्वित्तेर्विगम एव अनुदय एव तदन्यार्थम् ज्ञेयम् । वित्तिः प्रत्ययः । विद ज्ञाने । क्तिन् । तस्योदाहरणं क्रीडायां विकृतं च तदिति । तत् शोकहरणंच क्रीडायां विकृतं कृतमित्यर्थः । पूर्वं कर्मसमभिव्याहारात् व्यवहिताऽपि विवक्षितार्थप्रतीतिरासीत् । अत्र तु तथाविधस्य कस्यचन हेतोरभावेन प्रतीयमानविकारार्थत्वस्य बाधाभावात् विवक्षितः करणरूपोऽर्थोऽप्रतीत एवेति । रूढिश्च्युतमन्यार्थमिति कृत्वा विदग्धहृदयाः शोकवाहिना राजकन्यकाः इत्युदाहरणं दत्वा तदुपपादयन् विद्यानाथ आह विदग्धहृदया इति विशेषणं दग्धहृदयस्यावाचकत्वादन्यार्थमिति । विद्यादन्यार्थं

उद्यानपत्रिका-

विगमे इत्युपलभ्यमानं पाठं कृत्वाऽपि विगमे विवक्षितार्थाप्रतीतौ अन्यार्थमिति व्याख्येयम् । विगमोऽप्रतीतिरिति ॥४०॥

अथ अवाचकम्—

**हिमापहामित्रधरैर्व्याप्तं व्योमेत्यवाचकम् ।**

हिमापहोऽग्निः तस्यामित्रा आपः तासां धरा मेघाः तैर्व्योम व्याप्तमिति ।

नन्वेवमुक्त एव वाच्योऽर्थः । कथमिदमवाचकम् । उच्यते—

**साक्षादरूढं वाच्येऽर्थे नाभिधानं प्रतीयते ॥४१॥**

न हि यथा कथञ्चित् कस्यचिदर्थस्योपस्थापकं पदं तस्य वाचकं भवति माभूत् वह्निपदेन दाहे स्मृते तत्तस्य वाचकम् । किं तु यस्य पदस्य यस्मिन्नर्थे साक्षाद्रूढिः प्रसिद्धिरस्ति तत्तस्य वाचकम् । यत्तु पदं वाच्येऽर्थे साक्षान्न रूढं तत्तस्याभिधायकं वाचकमिति न प्रतीयते ॥४१॥

अथ अयुक्तिमत्—

**अयुक्तिमद्यथा दूता जलभृन्मारुतेन्दवः ।**
**तथा भ्रमरहारीतचक्रवाकशुकादयः ॥४२॥**

एते दूता भवन्तीतीदं यथा तथाविधमयुक्तिमदिति । युक्तिर्योग्यता ।४२।

का पुनरत्रायुक्तिः । उच्यते—

**अवाचोऽव्यक्तवाचश्च दूरदेशविचारिणः ।**
**कथं दूत्यं प्रपद्येरन्निति युक्त्या न युज्यते ॥४३॥**

जलभृदादयोऽवाचः । हारीतशुकादयोऽव्यक्तवाचः । युक्त्या योग्यतया चिन्त्यमानया हेतुभूतया न युज्यते न घटते ॥४३॥

तथापि

**यदि चोत्कण्ठया यत्तदुन्मत्त इव भाषते ।**
**तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते ॥४४॥**

यत्तत् योग्यमयोग्यं वा यद्भाति तदित्यर्थः । न चात्र शङ्कनीयं कथमनुबन्धः ।

मुत्कण्ठयाऽप्ययोग्यसम्भाषणमिति । उत्कण्ठा हि परिपोषं गता उन्मादान्न विशिष्यते । भाषते नायकः । तथा भवतु तेऽपि दूता भवन्तु । अत एव हि व्यासकालिदासप्रभृतयः सुमेधसस्तथाविधमुत्कण्ठाभाषितं बहु घटयन्ति। न हि कवयोऽप्युन्मत्ताः येन तन्नाद्रियेत । सुमेधसस्तु ते सन्तो यदिदं घटयन्ति तत् काव्यरसावहत्वादेवेति ॥४४॥

अथ गूढशब्दाभिधानम्—

**गूढशब्दाभिधानं च न प्रयोज्यं कथञ्चन ।**

यस्मात्

**सुधियामपि नैवेदमुपकाराय कल्पते ॥४५॥**

काव्यप्रयोजनं तावत् सर्वजनसाधारणम् । तत्र बहूनां पामराणां रसानुदयेऽपि यदि येकेचन पण्डिता रसमनुभवन्ति तावतैव तत् काव्यं कथञ्चित् सप्रयोजनं स्यात् । यदि तु गूढैरेव शब्दैरभिधानं वाक्ये भवति पण्डितानामपि रसाभावात् तत्काव्यं निष्प्रयोजनमिति ॥४५॥

अत्रोदाहरणम्—

**असिततितुगद्रिच्छित् स्वःक्षितां पतिरद्रिदृक् ।**
**अमिद्भिः शुभ्रदृग्दृष्टैर्द्विषो जङ्घ्नीयिषीष्ट वः ॥४६॥**

रत्नेश्वरसूरिरिदमेवं व्याचष्ट । असिततीति । ऋगतौ इति धात्वनुसारात् ऋतिर्वर्त्म असिता कृष्णा ऋतिर्यस्य सः कृष्णवर्त्मा वह्निः तस्य तुक् अपत्यम् । अद्रिच्छित् क्रौञ्चदारणत्वात् । स्वर्गे क्षियन्ति निवसन्ति ये देवाः तेषां पतिः सेनानीत्वात् । अद्रिदृक् द्वादशलोचनत्वात् । एवं भूतः कार्तिकेयः । अमिद्भिः अस्निग्धैः रूक्षैः । शुभ्रदृग्दृष्टैः धवलाक्षिविलोकितैः। सक्रोधं वीक्षणे तारकाभागस्योर्ध्वतया नीयमानत्वात्तथाभावो दृशाम् । वः युष्माकम् । द्विषः शत्रून् । जङ्घ्नीयिषीष्ट अत्यर्थं पुनःपुनर्वा वध्यात्। हन्तेर्यङि घ्नीभावे आशीर्लिङि रूपम् । मिदि स्नेहने । न मिन्दतीति अमित् । तस्य तृतीयाबहुवचनम् । शुभ्रदृगिति पृथक् पदमित्यपि शक्यं

उद्यानपत्रिका·

वक्तुम् । आश्रितेषु प्रसादसुभगदृष्टिरिति । तथापि द्विषोऽमित्रैर्दृष्टैर्निहन्त्विति ।

असितर्तीन् पापकारिणः तोजति हिनस्तीति असितर्तितुक् । अद्रिच्छित् पर्वतभेदनत्वात् । अद्रिदृक् सहस्राक्षत्वात् । स्वःक्षितां पतिरिन्द्र इत्यर्थोऽपि सुवचः ॥४६॥

एवं प्रकृतमेवार्थमपेक्ष्य काश्चन वक्रता हेयतयोपादिश्यन्त । अथेदानीमश्लीलाप्रकृतार्थप्रतीतिं शब्दस्वरूपं चापेक्ष्य काश्चन वक्रता हेयतयोपदिश्यन्ते । तथाहि—

श्रुतिदुष्टार्थदुष्टे च कल्पनादुष्टमित्यपि ।
श्रुतिकष्टं तथैवाहुर्वाचां दोषं चतुर्विधम् ॥४७॥

तत्र

विड्वर्चोविष्ठितक्लिन्नच्छिन्नवान्तप्रवृत्तयः ।
प्रचारधर्षितोद्गारविसर्गह्रादयन्वृताः ॥४८॥
हिरण्यरेताः सम्बाधपेलवोपस्थिताण्डजाः ।
वाकाटवादयश्चेति श्रुतिदुष्टा मता गिरः ॥४९॥

विट् वैश्यो जना वा विष्ठा च । वर्चः तेजो विष्ठा च । विष्ठितः विशेषेण स्थितो विष्ठावांश्च । क्लिन्नं आर्द्रं शोणितादिक्लेदयुक्तं च । छिन्नं त्रुटितम् । मङ्गलसूत्रादिच्छेदोपस्थितिरितो भवति । अत एव हीदमश्लीलं परिहरन्तो वर्धनशब्देन छेदं बोधयन्ति नालवर्धनमिति । निघण्टुश्च तन्मूलः वर्धनं छेदनेऽपिचेति । वान्तमिति निर्गमितार्थे प्रयुक्तं पित्तोपहतस्य अजीर्णान्नस्य वा वान्तिमुपस्थापयद् दुष्यति । प्रवृत्तिः औदासीन्यप्रच्युतिः विरेकश्च । प्रचारोऽपीदृश इति मन्यामहे । सञ्चार पुरीषोत्सर्गयोर्बोधात् । धर्षणं परिभवनार्थे बलात्कारेण कृतं स्त्र्युपभोगं प्रत्याययति । उद्गारो वान्तवत् । विसर्गो मोचनार्थः पर्दनप्रतीतिं जनयअनुवन्धः ।

4 *

ति । ह्लादः अव्यक्तशब्दवाची पर्दनप्रत्यायकः । हद हृद इत्यादि पुनः पाठं न बुध्यामहे । यन्तृता तत् अविवक्षितः । यन्ता यमयितृवाचकः ग्राम्यधर्मं बोधयतीति ग्रन्थकारो मन्यत इत्युत्पश्यामः । हिरण्यरेता अग्न्यर्थः धातुविशेषे धियं करोति । संबाधः सङ्कटो वराङ्गञ्चेति हेमचन्द्रः । पेलवः मृदुलवाची द्रमिडेषु मलोत्सर्गप्रत्ययकृत् । उपस्थितः बुद्ध्यारूढस्य सन्निहितस्य वा वाचकः स्त्रीकटिभागमतिहेतुः । उपस्थमिति हि मध्यमुच्यते । यथा रथोपस्थ उपाविशदिति । अण्डजः पक्ष्यर्थकः वृषणबुद्धिकारी । काटवं तिक्तता । अत्र काटेत्यंशः क्वचित् प्रेतवाहनमवगमयतीत्याहुः । एता गिरः श्रुतिदुष्टा मताः । श्रुत्या पदशक्तिमात्रेण जुगुप्सिताश्लीलार्थान्तरप्रत्ययहेतुतयो दोषवत्त्वात् ॥४९॥

यत्र पुनरेवं पदं स्वशक्त्या नैतादृशमर्थान्तरमवगमयति किन्तु अर्थ एवाभिहितो जुगुप्सितार्थान्तरसाधारण्यात् तादृशार्थान्तरबुद्धिं जनयति तदर्थदुष्टम् । तदुच्यते—

> अर्थदुष्टं पुनर्ज्ञेयं यत्रोक्ते जायते मतिः ।
> असभ्यवस्तुविषया शब्दैस्तद्वाचिभिर्यथा ॥५०॥
> हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
> पतनं जायतेऽवश्यं कृच्छ्रेण पुनरुन्नतिः ॥५१॥

यस्मिन् वाक्ये उक्ते असभ्यवस्तुसाधारणार्थवाचिभिः शब्दैरसभ्यवस्तुविषया बुद्धिर्जायते तद्वाक्यमर्थदुष्टम् । उदाह्रियते यथा हन्तुमेवेति । अत्र हेमचन्द्रः एतद्वाक्यं खलेषु प्रयुज्यमानं शेफसि प्रतीतिं जनयति । इहान्वयव्यतिरेकाभ्यामर्थस्यैवाश्लीलत्वमिति । तेनेदमर्थेन दुष्टं न श्रुत्येति भेदः ॥५१॥

अथ कल्पनादुष्टम्—

> पदद्वयस्य सन्धाने यदनिष्टं प्रकल्पते ।
> तदाहुः कल्पनादुष्टं स शौर्याभरणो यथा ॥५२॥

यदित्यव्ययं सप्तम्यर्थे । यस्मिन् वाक्ये पदद्वयसन्धाननिमित्तकमनु-

उत्थानपतिका-

चितार्थविज्ञानं जायते तद्वाक्यं कल्पनादुष्टमाहुः । उदाह्रियते यथा स शौर्याभरण इति । शौर्यमाभरणं यस्य तथाभूतः । अत्र शौर्यपदं आभरण-पदं वा स्वशक्त्या वा अर्थतो वा नानिष्टं प्रत्ययं करोति । किन्तु समा-सेन सन्धाने सति याभ इत्यनेनांशेनानिष्टप्रतीतिर्जायत इति कल्पनया दुष्टमेतत् । यभ मैथुने ॥५२॥

अथ श्रुतिकष्टम्-

**यथाऽजिह्लदिदित्यादि श्रुतिकष्टं च तद्विदुः ।**

श्रुतिकष्टं च अजिह्लदिदित्यादि यथा यादृशं तत् तादृशं पदं विदुः । अजिह्लदत् ह्लादतेर्णिचि लुङ् ।

ननु गम्भीरमधुरमिदं ह्लादते रूपम् । कथं नामेदं श्रुतिकष्टम् । उच्यते—

**न तदिच्छन्ति कृतिनः**

अर्धव्युत्पन्नानामिदं भाषितं यदिदं गम्भीरमधुरमिति । काव्यशब्दसौन्दर्य-माधुर्यविवेकालङ्कर्माणस्तु न तदिच्छन्ति । तस्माच्छ्रवणक्लेशजननादिदं श्रुतिकष्टमिति । एतदनुसरन् वाग्भटः काव्यानुशासने ह्लादैकमयीमिति श्रुतिकष्टमित्याह ।

एवमेष चतुर्विधो वाचां दोषः । पञ्चमोऽपि त्वस्ति । तदुच्यते—

**गण्डमप्यपरे किल ॥५३॥**

नेच्छन्ति । कोऽत्र दोषः । गल्लकट्यादिवत् केवलं ग्राम्योऽयं शब्द इति५३

अथैषां क्वचिद्दोषत्वमपोह्यते—

**सन्निवेशविशेषात्तु दुरुक्तमपि शोभते ।**
**नीलं पलाशमाबद्धमन्तराले स्रजामिव ॥५४॥**

तथा

**किञ्चिदाश्रयसौन्दर्याद्धत्ते शोभामसाध्वपि ।**
**कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम् ॥५५॥**

अनुबन्धः ।

तुकारो दोषत्वापवादार्थः । मलीमसं मलिनम् ॥५५॥

तत्र सन्निवेशविशेषाददोषत्वमुदाह्रियते—

आपाण्डुगण्डमेतत्ते वदनं वनजेक्षणे ।

इत्यत्र

सङ्गमात् पाण्डुशब्दस्य गण्डः साधु यथोदितम् ॥५६॥

गण्डः गण्डपदम् । यथेदं साधूदितं तथा सन्निवेशविशेषाद्दुरुक्तमपि शोभत इत्यन्वयः । गण्डः साधुर्यथोदितः इति वा पठितव्यम् ॥५६॥

आश्रयसौन्दर्याददोषत्वमुदाहरिष्यन्नाह—

अनयाऽन्यदपि ज्ञेयं दिशा युक्तमसाध्वपि ।

अन्यदपि दुरुक्तं स्वयमसाधु सदपि अनया दिशा युक्तं साधु ज्ञेयम् । तदेतत् पूर्वोदाहरणबुद्धिविच्छेदायोक्तमिति विभाव्यम् ।

अथोदाहरणं ददन्नेव दोषत्वापवादमुपसंहरति—

यथा विक्लिन्नगण्डानां करिणां मदवारिभिः ॥५७॥

मदक्लिन्नकपोलानां द्विरदानां चतुश्शती ।

यथा तद्वदसाधीयः साधीयश्च प्रयोजयेत् ॥५८॥

यथा मदवारिभिर्विक्लिन्नगण्डानां करिणां इत्यत्र गम्भीरप्रकृतीनां गजानामाश्रयभूतानां सौन्दर्येण स्वयमसाधू अपि विक्लिन्नगण्डशब्दौ साधू भवतः यथा च मदक्लिन्नकपोलानां द्विरदानां चत्वारि शतानीति प्रयोगान्तरे क्लिन्नशब्दः स्वयमतिशयेनासाधुरपि द्विरदकपोलविषयत्वात् साधुरेव भवति तद्वत् असाधीयश्च पदं साधीयः कविः प्रयोजयेत् । अप्यर्थश्चो भिन्नक्रमः । करिणामुदवारिभिरिति पाठं न बुध्यामहे ॥५८॥

एवमुक्तं सर्वमनवधारितवता कविना

एतद्ग्राह्यं सुरभि कुसुमं ग्राम्यमेतन्निधेयं

धत्ते शोभां विरचितमिदं स्थानमस्यैतदस्य ।

मालाकारो रचयति यथा साधु विज्ञाय मालां
योज्यं काव्येष्ववहितधिया तद्वदेवाभिधानम् ॥५९॥

इति भामहालङ्कारे प्रथमः परिच्छेदः ।

---

सुरभित्वादिदं कुसुमं ग्राह्यम् । ग्राम्यत्वादेतत् निधेयं नीचैर्धेयं त्याज्यमिति । ग्राम्यमपीदं विशेषेण सुरभिकुसुमान्तरालवर्तित्वेन रचितं ग्रथितं शोभां धत्ते । अस्य कुसुमस्यैतत्स्थानं अस्यैतत्स्थानम् । एतच्छब्दस्यावृत्तिर्द्रष्टव्या । इत्येवं साधु विज्ञायेति । अभिधानं पदम् ।

वाचां परिश्रम्य समीरितानां
गृह्णातु मा वा रसमेष लोकः ।
योऽसौ नियन्ता हृदि सन्निविष्टः
स्वयं स वक्ता स्वयमत्र तृप्तः ॥

इत्युद्यानवृत्तौ प्रथमः परिच्छेदः ।

---



॥ श्रीः ॥

# अथ द्वितीयः परिच्छेदः ॥



पण्णागेधसि नाथो मे सुखं स्वपिति भोगिनि ।
किन्त्वस्य वलते दृङ्मय्यौषसाम्बुजजित्वरी ॥

उक्तं काव्यस्य शरीरम् । ये तस्याशोभायै तेऽपि पदपदार्थसम्बन्धिनो दोषा हेयत्वेनोपपादिताः । ये पुनस्तस्य शोभायै ते गुणापरपर्याया अलङ्कारा इदानीं प्रतिपाद्यन्ते । तत्र यमकरूपकादिषु वक्ष्यमाणेष्वन्यतमस्य काव्येषु नियमः । न सर्वस्य । एकैकमात्रेणापि काव्यत्वनिष्पत्तेः । तेन प्रत्येकमेते काव्यबन्धेष्वनियताः । नियतौ पुनर्द्वौ स्तः । कौ तौ । माधुर्यं प्रसादश्च । न खल्वेतौ विनाऽलङ्कारान्तरयुक्तोऽपि कश्चित् काव्यबन्धः शोभते । तस्मादिमौ नियतौ । अनेनैव नियमरूपेण विशेषेण गुण इति व्यवहारव्यवस्थामिमौ अर्वाचीनेषु लभेते । न पुनः स्वरूपतो गुणालङ्कारयोः कश्चन विशेषः । अनयोश्च सर्वकाव्यबन्धनियतयोरलङ्कारयोः प्रतिबन्धको दीर्घसमासः । तस्मात् काव्यबन्धेषु दीर्घसमासः परित्याज्यः । तदेतदाह—

**माधुर्यमभिवाञ्छन्तः प्रसादं च सुमेधसः ।**
**समासवन्ति भूयांसि न पदानि प्रयुञ्जते ॥ १ ॥**

अन्ये पुनराहुः– सत्यं समासाभावे माधुर्यं भवति प्रसादश्च । किं तु क्वचित् समासोऽपि शोभामावहति । प्रसादश्च न हीयते । न हि सर्वत्र समासो दुष्ट इति निरूप्यते । तस्मादयमपि कश्चिदलङ्कारः । स तु माधुर्येण केवलं विकल्पितः । तेन माधुर्यमोजो वा प्रसादश्च काव्यबन्धेषु नियतौ अन्यश्च कश्चिदलङ्कारः । सोऽयं शोभाधायकः समासरूपो गुण ओज इत्युच्यते— इति । तदेतत् सोदाहरणमाह—

उद्यानपत्रिका-

**केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि ।**
**यथा मन्दारकुसुमरेणुपिञ्जरितालका ॥ २ ॥**

अभिधित्सन्तः वक्तुमिच्छन्तः । बहून्यपि पदानि समस्यन्ति समासवन्ति कुर्वन्ति । मन्दारेति पञ्च पदानि समासवन्ति ॥ २ ॥

क्िन्नाम माधुर्यम् । उच्यते—

**श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते ।**

दीर्घसमासराहित्यं माधुर्यं वेदितव्यम् । शब्दसमासेऽर्थसमासोऽप्यवर्जनीयः । तेनातिसमस्तार्थमिति अतिसमस्तशब्दमित्येवोक्तं भवति । तदेतदेवंविधं माधुर्यमुक्तं वामनेन पृथक्पदत्वं माधुर्यमिति । न चैतन्मन्तव्यं पृथक्पदत्वमात्रेण माधुर्यं सम्पद्यत इति । श्राव्या हि शब्दाः काव्यस्य शरीरम् । अन्यथा श्रुतिकटुत्वेनोद्वेगजननात् । यथा—

प्रतीपभूपैरिव किं ततो भिया
विरुद्धधर्मैरपि भेत्तृतोज्झिता ।
अमित्रजिन्मित्रजिदोजसा स य-
द्विचारदृक् चारदृगप्यवर्तत ॥

तस्मादेतद्दोषवर्जने स्ववहितैः कविभिर्भाव्यमित्यभिप्रायवानाह श्रव्यमिति । न त्वेतन्माधुर्यस्य लक्षणम् । तेन यदाह हेमचन्द्रः— तेन श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यते इति माधुर्यलक्षणत्वेन श्रव्यत्वं यद्भामहेनोक्तं तन्न युक्तम् — इति तन्न युक्तम् । अत्र नातिसमस्तार्थशब्दम् इति । पाठान्तरं वेदितव्यम् ।

अथ प्रसादः—

**आविद्वदङ्गनाबालप्रतीतार्थं प्रसादवत् ॥ ३ ॥**

प्रतीतोऽवगतः । उभयोरुदाहरणम्— यथा

कर्णं तु शूरं पतितं पृथिव्यां
शराचितं शोणितदिग्धगात्रम् ।

अनुबन्धः ।

यदृच्छया सूर्यमिवात्रनिं गतं
दिदृक्षवः सम्परिवार्य तस्थुः ॥

यथा च

एतावदुक्त्वा प्रतियातुकामं
शिष्यं महर्षेर्नृपतिर्निषिध्य ।
किं वस्तु विद्वन् गुरवे प्रदेयं
त्वया कियद्वेति तमन्वयुङ्क्त ॥३॥

लक्षितप्रायमोजः । समासभूयस्त्वरूपं तदिति । अथानियतालङ्काराः।
तत्र

**अनुप्रासः सयमको रूपकं दीपकोपमे ।**
**इति वाचामलङ्काराः पञ्चैवान्यैरुदाहृताः ॥४॥**

तेषु

**सरूपवर्णविन्यासमनुप्रासं प्रचक्षते ।**
**किन्तया चिन्तया कान्ते नितान्तेति यथोदितम् ॥५॥**

किन्तयेत्यादि काव्यवाक्यं यथा यादृशं यद्विशिष्टमुच्यते यद्वाऽस्मिन् वाक्ये यादृशः तादृशः सरूपवर्णविन्यासोऽनुप्रास इति । हे कान्ते प्रेयसि तया अन्यत्र सक्तोऽस्मीत्येवंरूपया चिन्तया किं कस्मात् नितान्ता अत्यर्थं तान्ता म्लानिं गता भवसि । तान्तिहेतुं तां चिन्तां जहीहीत्यर्थः॥५॥

अपरुषाणामकोमलानां च वर्णानां विन्यासेन सम्पन्नोऽयमेकोऽनुप्रासः। कोमलवर्णविन्यासकृतोऽपरोऽप्यनुप्रासोऽस्ति । तदाह–

**ग्राम्यानुप्रासमन्यत्तु मन्यन्ते सुधियोऽपरं ।**

यथा

**स लोलमालालीनालिकुलाकुलगलो बलः ॥ ६ ॥**

बलो बलरामः । अत्र ग्राम्यानुप्राससमाख्यानात् पूर्वो नागरिकानुप्रास इति गम्यते । 'अन्यत्तु मन्यन्ते' 'नीलालिकुल' इत्येवं पाठे नातीवौचित्यमिति ध्येयम् ॥६॥

[ उद्यानपत्रिका-

अनुप्रासं शिक्षमाणान् कवीन् प्रत्याह—

**नानार्थवन्तोऽनुप्रासा न चाप्यसदृशाक्षराः ।**
**युक्त्याऽनया मध्यमया जायन्ते चारवो गिरः ॥ ७॥**

रामो राम इति नानुप्रासः । अर्थभेदाभावात् । रामो वभाविति नानुप्रासः । असदृशाक्षरत्वात् । रामनाम महद्धामेति त्वनुप्रासः । नानार्थत्वेन सदृशाक्षरत्वेन च यस्मादियमत्र मध्यमा युक्तिः योगः प्रयोगः रचनेति ॥ ७ ॥

परे तु तात्पर्यभेदेनैकार्थस्यैव पदस्य द्विः प्रयोगेऽप्यनुप्रासमिच्छन्ति । तदाह—

**लाटीयमप्यनुप्रासमिहेच्छन्त्यपरे यथा ।**
**दृष्टिं दृष्टिसुखां धेहि चन्द्रश्चन्द्रमुखोदितः ॥ ८॥**

इह काव्येष्वलङ्कारेषु वा । हे चन्द्रमुख दृष्टिं दृष्टिसुखां धेहि । स्वभावतो हि ते प्रेमस्यन्दि प्रसन्नदृष्टि मुखं चन्द्रवत्प्रह्लादनम् । इदानीन्तु कोपेन कूणिता ते दृष्टिर्नास्माकं दृष्टिसुखा । तदिदं किं युक्तम् । तस्मात्प्रसन्नो दृष्टिं दृष्टिसुखां धारय । अन्यथा मे सखी भृशं पीडिता भविष्यति । चन्द्रमा ह्युदितः । स त्वया विरहितायास्तस्या दवदहनायेत ॥ ८ ॥

अथ यमकम् । यमौ द्वौ सहजातौ तत्प्रतिकृतिर्यमकमिति हेमचन्द्रः ।

**आदिमध्यान्तयमकं पादाभ्यासं तथावली ।**
**समस्तपादयमकमित्येतत्पञ्चधोच्यते ॥ ९॥**

एतत् यमकम् । पादस्याभ्यासो यत्र तत् पादाभ्यासम् । पादाभ्यास इत्येव वा पठितव्यम् ॥ ९ ॥

ननु पञ्चधेति न युक्तम् । सन्दष्टकसमुद्गादीनां यमकान्तराणामपि सत्त्वात् । एतद्विस्तरो रुद्रटे । किञ्च आदिमध्यान्तयमकमिति आदौ मध्ये अन्ते चेति त्रीणि; पादाभ्यासादीनि त्रीणीति षड्विधत्वं भवत्येव प्रतिपाद्यते । तत्कथं पञ्चधेति । अत्राह—

**सन्दष्टकसमुद्गादेरत्रैवान्तर्गतिर्मता ।**
**आदौ मध्यान्तयोर्वा स्यादिति पञ्चैव तद्यथा ॥ १० ॥**

अनुबन्धः ।

पादाभ्यासे सन्दष्टकादि सर्वमन्तर्भवति । आदौ मध्यान्तयोश्च यमकमादिमध्यान्त-यमकमिति द्वयोरेवाभिप्रेतत्वान्न त्रैविध्यमुक्तं भवतीति न पञ्चधात्वोक्तिविरोध इति। वस्तुतस्तु आदौ मध्ये अन्ते आदिमध्ययोः आद्यन्तयोश्चेत्यन्तमुच्चावचोऽस्य भेद इत्यन्यत्र विस्तरः । यथेति । क्रमेणोदाहरणानि प्रदर्श्यन्त इत्यर्थः ॥ १० ॥

आदियमकम्—

साधुना साधुना तेन राजता राजता भृता ।
सहितं सहितं कर्तुं सङ्गतं सङ्गतं जनम् ॥ ११ ॥

सङ्गतं सौहार्दं, सङ्गतं प्राप्तं जनं सहितं हितैराप्तैर्जनैःसह सहितं ईप्सितार्थवन्तं कर्तुं साधुना आत्मगुणपूर्णेन अत एव राजता लोके प्रकाशमानेन तेन कुलशीलसम्पन्नेन महापुरुषेण सा परितः कीर्त्यमानविभवा राजता राजभावः भृता ऊढा ॥ ११ ॥

मध्यान्तयमकम्—

साधुः संसाराद् बिभ्यदस्मादसारा-
त्कृत्वा क्लेशान्तं याति वर्त्म प्रशान्तम् ।
जातिं व्याधीनां दुर्दमानामधीनां
वाञ्छन् ज्यायस्त्वं छिन्धि मुक्तानयस्त्वम् ॥ १२ ॥

साधुः विनयविवेकसम्पन्नः असारात् भोग्यशून्यात् अस्मात् संसाराद्भीतः पातञ्जलोक्तानामविद्यास्मितारागद्वेषाभिनिवेशरूपाणां क्लेशानां अन्तं नाशं कृत्वा प्रशान्तं प्रवृत्तिविशेषाभावेन शान्तिसमृद्धं वर्त्म निवृत्तिमार्गं याति । ज्यायस्त्वं वाञ्छन् एवं निवृत्तिमार्गावस्थानलभ्यमहानन्दभागितां यदि वाञ्छसीत्यर्थः त्वं मुक्तानयः मुक्ताः परित्यक्ताः अनयाः अन्याय्याः प्रतिषिद्धाः अधर्माः येन तथाभूतः सन् दुर्दमानां दुष्परिहराणां व्याधीनां कायिकमानसिकानां रोगाणां अधीनां वशङ्गतां जातिं जनिं जन्मेति यावत् छिन्धि । दुर्दयानामित्यपपाठः ॥ १२ ॥

पादाभ्यासम्—

न ते धीर्धीर भोगेषु रमणीयेषु सङ्गता ।
मुनीनपि हरन्त्येते रमणी येषु सङ्गता ॥ १३ ॥

उद्यानपतिका

हे धैर्यशालिन् तव धीः रमणीयेषु भोगेषु न सङ्गं गता । येषु नारी सङ्गता तादृशा एते भोगा मुनीनपि हरन्ति निष्ठायाः प्रच्यावयन्ति । मुनीनपि हरन्त्येषा रमणीति वा पाठः । मुनीनामपि धैर्यहरणक्षमा एषा रमणी येषु सङ्गता तादृशेषु भोगेषु तव धीर्न सङ्गिनीति तव धैर्यं श्लाघनीयमिति भावः ॥ १३ ॥

आवली —

सितासिताक्षीं सुपयोधराधरां
सुसम्मदां व्यक्तमदां ललामदाम् ।
घनाघना नीलघना घनालकां
प्रियामिमामुत्सुकयन्ति यन्ति च ॥ १४ ॥

प्रोषितः कश्चित् कामी मेघोन्नतिं दृष्ट्वा कान्तां स्मरन् परिदेवनां करोति । तारकायामसिते अन्यत्र सिते चाक्षिणी यस्यास्ताम् । घनगर्जितं श्रुत्वा नूनं भीतभीता नभसि दिक्षु च दृशः प्रसारयतीत्यभिप्रायः । पयोधरौ चाधरश्च शोभना यस्याः । 'उपरि घनं घनपटलं दूरे दयितः किमेतदापतितं' इति शोचन्ती नूनमश्रूणि मुञ्चति यानि तस्या अधरं पयोधरौ च दूषयन्ति । न चैवम्भावः तदीयपयोधराधरस्य युक्तमिति । हन्त हता मेघा एतामेवमवस्थान्तरमानयन्ति या पूर्वमत्यन्तं व्यलसदिति पूर्वदशां स्मरन्नाह सुसम्मदामिति । सर्वसम्पत्समृद्धतया शोभनप्रहर्षवतीम् । व्यक्तमदां यौवनोज्जृम्भणकाष्ठाकृतविविधहावभावशालिनीम् । ललामदां स्वकान्त्या भूषणान्यपि खण्डयन्तीम् । पुनरपि वर्तमानदशां चिन्तयन्नाह घनालकामिति । घना निबिडा अलका यस्यास्ताम् । पूर्वं तथाभूता सा सम्प्रति कण्ठाश्लेषप्रणयिनो मम दूरीभावात् चिन्तापराऽसकृद्दीर्घं निश्वसन्ती एकहस्तानिषण्णगण्डस्थला संस्कारहान्या परिधूसरान् लम्बालकान् मुहुर्मुखमावृण्वतोऽपसारयन्ती वर्तत इति । एवम्भूतामिमां प्रियाम् । भावनाप्रकर्षेण प्रत्यक्षमिव पश्यन्नाह इमामिति । नीलघनाः नीलवर्णाश्च निबिडाश्च । घनाघनाः वर्षुका मेघाः । उत्सुकयन्ति उत्सुकां विकृतचित्तां कुर्वन्ति । एवं चिरं ध्यात्वा उन्मत्त इव भवन् मैवं प्रियाया हिंसां कुरुतेति प्रार्थयिष्यमाणो मेघाननुपसर्तुमैच्छत् । ते तु वातेअनुबन्धः ।

नापह्रियमाणाः प्राचलन् । तद्दृष्ट्वाऽऽह यन्ति चेति । कथं यान्त्येव न मन्त्राकर्णश्रवणाय तिष्ठन्तीति ॥ १४ ॥

समस्तपादयमकम्—

अमी नृपा दत्तसमग्रशासनाः
कदाचिदप्यप्रतिबद्धशासनाः ॥
कृतागसां मार्गभिदां च शासनाः
पितृक्रमाध्यासिततादृशासनाः ॥ १५ ॥

राज्ञः स्तौति । शासनं विनयाधानम् । प्रजानां कृत्याकृत्यविवेकः परिपूर्णः सम्पादित इति । एषामाज्ञा न कदाचित् प्रतिहन्यते । चोरप्रभृतयः कृतागसः । वेदशास्त्रेश्वरदूषका मार्गभिदः । तेषां यथोचितं दण्डकारिणः । न केवलमेवमेते गुणेन पराक्रमेण चारित्रेण च विशिष्यन्ते किन्तु कुलेनापीत्याह पित्रिति । यदध्यासीनानामेवं गुणपराक्रमचारित्राणि भवन्ति तादृशं सिंहासनमेते पितृक्रमेणाध्यासत इति ॥ १५ ॥

एवं पादैकदेशभूतस्य शासनेत्यंशस्य चतुर्षु पादेष्वैकरूप्यादिदं समस्तपादयमकम् । न चैतन्मन्तव्यम् । सर्वेष्वपि पादेषु यत्रैकदेशस्यैकरूप्यं भवति तत्रैव यमकं भवति नान्यत्रेति । किन्तर्हि ।

अनन्तरैकान्तरयोरेवं पादान्तयोरपि ॥

प्रथमद्वितीयपादान्तौ तृतीयचतुर्थपादान्तौ द्वितीयतृतीयपादान्तौ चानन्तरौ । प्रथमतृतीयपादान्तौ द्वितीयचतुर्थपादान्तौ चैकान्तरौ । अनन्तरैकान्तरयोः पादान्तयोरैकरूप्ये एवं यमकं भवतीत्यर्थः । एवं त्रिष्वपि पादान्तेषु भवतीति बोध्यम् । एषामुदाहरणानि दण्डिरुद्रटादौ ।

एवमनेकेषु पादेष्वेकदेशस्यैकरूपत्वे यमकमुक्तम् । यत्र पुनः कृत्स्नः पादः पादान्तरेणैकरूपो भवति तत्रापि पादाभ्यासं नाम यमकं भवतीत्युक्तम् । अत्र विशेषमाह—

कृत्स्नं च सर्वपादेषु

कृत्स्नं न त्वेकदेश एव । एवमित्यनुषज्य यमकं भवतीत्यर्थो बोध्यः । यथा श्रीमतिं

उद्यानपालिका-

यादवाभ्युदये—

विराजमानादसमानभूमा विराजमानादसमानभूमा ।
विराजमानादसमानभूमा विराजमानादसमानभूमा ॥ (VI. १०७)

ये न वश्यवाचः कुकवयः तेषामत्र चापलं वारयन्नाह—

दुष्करं साधु तादृशम् ॥ १६ ॥

सर्वेषु पादेषु यत्र कृत्स्नमेकरूपं भवति तादृशं महायमकं साधु समीचीनं दुष्करम् । असमीचीनं तु को न कुर्यादिति । दुष्कृतमित्यपपाठः ॥ १६ ॥

ननु किं तद्यमकस्य साधुत्वम् । तदेतत् प्रतिपादयिष्यन् प्रथमं यमकस्वरूपं तावन्निरूपयति—

तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परम् ।
वर्णानां यः पुनर्वादो यमकं तन्निगद्यते ॥ १७ ॥

तुल्यश्रुतीनां तुल्यश्रवणानां । तुल्यरूपाणामिति यावत् । न हि याति पश्य इति यमकं भवति । भिन्नानामिति भिन्नार्थानामित्यर्थः । नहि गच्छति गच्छति इति यमकं भवति । सहितं सहितं कर्तुं इति तु यमकमिति ॥ १७ ॥

एवंलक्षणं तावद्यमकम् । तस्य साधुत्वमीदृशं द्रष्टव्यम्—

प्रतीतशब्दमोजस्वि सुश्लिष्टपदसंधि च ॥
प्रसादि स्वभिधानं च यमकं कृतिनां मतम् ॥ १८ ॥

यत्र शब्दाः प्रसिद्धा भवन्ति न त्वप्रसिद्धेभ्यो धातुभ्यो निष्पादिताः । ओजश्च भवति । समासवदेकपदत्वेन भासमानत्वमिह ओजः । अत्यन्तं पृथक्पदत्वे हि भासमाने यमकबुद्धिर्नोदियात् । पदानां सन्धिश्च सुश्लिष्टो भवति न तूच्चारणक्लेशदायी । यथा 'अल्पेतरत्वाच्छ्रुतनिष्क्रयस्य' इति । काव्यसामान्यगुण एवायमिहोक्तः । शब्दचित्रमिति कृत्वा मा तत्रोपेक्षा कारीति । प्रसादि । प्रसिद्धार्थाश्च शब्दा भवन्ति । न त्वेकाक्षरद्व्यक्षरकोशसमालोचनसम्पाद्यार्थाः । स्वभिधानञ्च सुखोच्चारणीयाश्च शब्दा भवन्ति नान्यथेति । एतादृशं यमकं कृतिनां मतम् । साध्वित्यर्थः ॥ १८ ॥

असाधु यमकमुदाहरन्नाह—

अनुबन्धः ।

**नानाधात्वर्थगम्भीरा यमकव्यपदेशिनी ॥**
**प्रहेलिका सा ह्युदिता रामशर्माच्युतोत्तरे ॥ १९ ॥**

रामशर्मा नाम कविः । तेन कृतो यमकबहुलः प्रबन्धः अच्युतोत्तरमिति पश्यामः । तत्र यमकस्य व्यपदेशमात्रम् । न तु वस्तुतो यमकमस्ति । कस्मात् । अत्यन्तासिद्धधातुनिष्पन्नाप्रयुक्ताप्रतीतार्थशब्दमयत्वात् । तदेतदाह नानाधात्वर्थगम्भीरेति । सोपहासमिदम् । गम्भीरेति दुरवगाहार्थम् । नानेति अप्रयुक्तधातुशतनिचितत्वाभिप्रायम् । यदि न यमकं किं तर्हि तत् अत्राह प्रहेलिका हि सेति । प्रहेलिका हि न काव्यत्वापादकः कश्चिदलङ्कारविशेषः । अपि तु अर्थवञ्चनामात्रमिति ॥ १९ ॥

मा तावदेवंविधे निबन्धे कवयः प्रवर्तिषतेत्यभिप्रेत्य तद्विनिन्दन्निवाह—

**काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत् ॥**
**उत्सवः सुधियामेव हन्त दुर्मेधसो हताः ॥ २० ॥**

सुकुमारमतीनामपि हि विनयाय काव्यानि प्रवर्तन्ते । तानि चेन्न सुबोधार्थानि न तत्र प्रवर्तेरन्निति ते विहतप्रयोजनाः । एवं चेत् काव्यान्यपि न बहुफलानि । रूपान्तरेण शास्त्राण्येव हि तानि भवन्ति यत्रेदमुच्यते व्याख्यानतो विशेषप्रतिपत्तिरिति । काव्यानि पुनः आविद्वदङ्गनाबालं प्रतीतार्थानीति ॥ २० ॥

इति द्वौ शब्दालङ्कारौ । अथार्थालङ्कारेषु रूपकम्—

**उपमानेन यत्तत्त्वमुपमेयस्य रूप्यते ॥**
**गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः ॥ २१ ॥**

गुणानां साम्यं दृष्ट्वा यत् उपमानेन हेतुना तद्वाचकं पदमुपादायेति यावत् उपमेयस्य तत्त्वं स्वरूपं रूप्यते रूपवत् क्रियते अर्थादुपमानरूपेणेति गम्यते तद् रूपकं नामालङ्कारमाहुरिति । अथवा यद् उपमानेन, तत्त्वं उपमानसम्बन्धि रूपं उपमेयस्य रूप्यते रूपं क्रियते तद्रूपकमिति । अथवा उपमानेन सहोपमेयस्य तत्त्वं तादात्म्यं अभिन्नत्वमिति यावत् यद्रूप्यते तद्रूपकमिति ॥ २१ ॥

एतद् विभज्यते—

**समस्तवस्तुविषयमेकदेशविवर्ति च ॥**
**द्विधा रूपकमुद्दिष्टमेतत्तच्चोच्यते यथा ॥ २२ ॥**

उद्यानपत्रिका·

इति द्विधा एतद्रूपकं अलङ्कारविद्भिरुक्तम् । तद्द्वयमपि उदाह्रियते । यथेति ।

समस्तवस्तुविषयम्—

**शीकराम्भोमदस्रजस्तुङ्गा जलददन्तिनः ॥**
**निर्यान्तो मदयन्तीमे शक्रकार्मुककारणम् (वारणाः) ॥ २३ ॥**

शीकराम्भ एव मदः तं मुञ्चन्ति । तुङ्गाः महान्तः उन्नताश्च । शक्रकार्मुकवारणाः इन्द्रधनुरेव वारणः वारवाणः कञ्चुकम् चित्रवर्णः कुथ इति येषां ते शक्रकार्मुकवारणाः । वारणो वारवाणार्थोऽपि वाचस्पत्ये पठितः । शक्रकार्मुककारणमिति तु पाठे शक्रकार्मुकधारिण इति यद्यपि कथञ्चिदर्थ उच्येत तथापि समस्तवस्तुविषयत्वं भज्येतेति पश्यामः । एवम्भूता इमे जलदा एव दन्तिनः निर्यान्तः दिशां कोणेभ्यो निर्गत्य व्योम व्याप्नुवन्तः मदयन्ति प्रियामुत्सुकयन्ति । मण्डयन्तीति पाठान्तरम् । तदा व्योम कर्म ॥ २३ ॥

एकदेशविवर्ति—

**तटिद्वलयकक्ष्याणां बलाकामालभारिणाम् ॥**
**पयोमुचां ध्वनिर्धीरो दुनोति मम तां प्रियाम् ॥ २४ ॥**

तटिद्वलया एव कक्ष्याः हिरण्मयपट्टबन्धा येषां तेषाम् । बलाकापङ्क्तय एव मालाः स्रजः ता बिभ्रताम् । इष्टकेषीकामालानां चिततूलभारिषु इति सूत्रेण मालाशब्दस्य ह्रस्वः । एवंविधानां पयोमुचाम् । एषां दन्तित्वेन रूपणाभावाद्वैकदेशविवर्तित्वम् । धीरः अन्तर्गृहोपविष्टाया अपि श्रवसी आघ्नन्नित्यर्थः । तामिति दुर्दशां भावयन्नाह । दुनोति दुःखाकरोति ॥ २४ ॥

अथ दीपकम्—

**आदिमध्यान्तविषयं त्रिधा दीपकमिष्यते ॥**

नन्विमे मिथो भिन्नाश्रयोऽलङ्काराः किन्न भवन्ति । नेत्याह—

**एकस्यैव त्र्यवस्थत्वादिति तद्भिद्यते त्रिधा ॥ २५॥**

दीपकशब्दार्थो हि त्रिष्वप्यन्वितः । तेनायमेक एवालङ्कारो दीपकमिति । एतदलङ्कारनिबन्धनपदनिवेशनं तु आदौ मध्ये अन्ते वा भवतीति त्रिधोऽवस्था अस्या अनुबन्धः ।

लङ्कारस्य भवन्ति । तेनावान्तरभेद एवात्र युक्तो न जातिभेद इति । एकस्यैव एक-रूपस्यैव इति आदिमध्यान्तविषयमित्युक्तप्रकारेण त्र्यवस्थत्वात् त्रिस्थानत्वात् तत् दीपकं त्रिधा भिद्यत इत्यन्वयः । इति उक्तप्रकारेण भिद्यत इति वा । आदिमध्यान्ताः विषयाः स्थानानि यस्य तदादिमध्यान्तविषयम् ॥ २५ ॥

कस्तर्हि दीपकपदार्थः यस्य सर्वत्रान्वयः । अत्राह—

**अमूनि कुर्वतेऽन्वर्थामस्याख्यामर्थदीपनात् ॥**

अमूनि आदिमध्यान्तविषयास्त्रयोऽपि भेदाः । सामान्ये नपुंसकम् । अस्यालङ्कारस्य दीपकमित्याख्यां अर्थमनुगता अन्वर्थां अर्थानुसारिणीत्यर्थः तादृशीं कुर्वते। कथम् । अर्थदीपनात् । सकृत् प्रयुक्तं पदं यत् बहुल सम्बध्य बहूनर्थान् दीपयति तद्दीपकम् । सकृच्च आदौ मध्ये अन्ते वा प्रयुक्तं पदं सर्वानेव वाक्यार्थान् दीपयतीति स्थित एव त्रिष्वपि प्रभेदेषु दीपकपदार्थान्वय इति । दीप इव दीपक-मिति हेमचन्द्रः ।

उदाहरणेष्वेवेदं प्रस्फुटं भविष्यति । तस्मात्—

**त्रिभिर्निदर्शनैश्चेदं त्रिधा निर्दिश्यते यथा ॥ २६ ॥**

पूर्ववाक्यार्थसमुच्चयार्थश्चकारः ॥ २६ ॥

आदिदीपकम्—

**मदो जनयति प्रीतिं साऽनङ्गं मानभङ्गुरम् ।**
**स प्रियासङ्गमोत्कण्ठां साऽसह्यां मनसः शुचम् ॥ २७ ॥**

मदः सुरादिपानजनिताविकारविशेष इति हेमचन्द्रः । मानभङ्गुरं मानभञ्जन-शीलम् । यद्वा मानो भङ्गुरो यस्मिन्निति समास इति च स एवाह । अत्र विशे-षणस्य भङ्गुरस्य पूर्वनिपातापत्तेः प्रथम एव कल्पः श्रेयान् । अत्र प्रथमवाक्य-प्रयुक्तो जनयतिरुत्तरत्र सर्वत्रान्वेति । इदमेव

**शुक्लः श्वेतार्चिषो वृद्ध्यै पक्षः पञ्चशरस्य सः ।**
**स च रागस्य रागोऽपि यूनां रत्युत्सवश्रियः ॥**
**इत्यादिदीपकत्वेऽपि पूर्वपूर्वव्यपेक्षिणी ।**
**वाक्यमाला प्रयुक्तेति तन्मालादीपकं मतम् ॥**

इति दण्डिलक्षितमालादीपकमपि भवतीति ज्ञेयम् ॥ २७ ॥

उद्यानपालिका-

मध्यदीपकम्—

**मालिनीरंशुकभृतः स्त्रियोऽलङ्कुरुते मधुः ।**
**हारीतशुकवाचश्च भूधराणामुपत्यकाः ॥ २८ ॥**

व्यधिकरणो बहुव्रीहिः ।

मालिनीः स्रग्विणीः अंशुकभृतः महार्घपट्टाम्बरधारिणीः । एवं मधुमासः स्त्रियोऽलङ्कुरुते । हारीतानां पक्षिविशेषाणां शुकानां च वाचो यत्र ताः हारीतशुकवाचः । एवं भूधराणामुपत्यकाश्च मधुमासोऽलङ्कुरुते । अत्र मधुरलङ्कुरुत इति मध्ये स्थितं पूर्वत्रोत्तरत्र चान्वेति ॥ २८ ॥

अन्तदीपकम्—

**चीरीमतीररण्यानीः सरितः शुष्यदम्भसः ।**
**प्रवासिनां च चेतांसि शुचिरन्तं निनीषति ॥ २९ ॥**

महारण्यमरण्यानी । चीरी अदृश्यदेहस्तीव्रविरावी जन्तुविशेषः । भृङ्गारी चीरुका चीरी झिल्लिका च समा इमा इत्यमरः । विजनत्वेन शब्दान्तराभावात् कर्णरन्ध्रभेदिपरुषझिल्लीनिनादमात्रपूरिता अरण्यानीः शुचिः आषाढमासः अन्तं निनीषति नाशयितुमिच्छति । अत्युच्छ्रायो हि घर्मस्य ग्रीष्मर्तोरुत्तरभागे आषाढमासे । तेन स्कन्धान्तरोत्थितदवाग्निशिखाभिररण्यान्यः सजन्तव आलीढा भवन्तीत्यर्थः । शुष्यदम्भसः सरितोऽपि शुचिरन्तं निनीषति । अत्यन्तमम्भसां शोषणात् । प्रवासिनां च चेतांसि शुचिरन्तं निनीषति । सन्निहितवर्षाकालत्वादिति वयमुत्पश्यामः । अत एव ह्याह आषाढस्य प्रथमदिवस इति । प्रत्यासन्ने नभसीति च । अत्रान्यथा भावं वर्णयन् मल्लिनाथो न सम्यग्दर्शीति न विस्तीर्यते । अत्रान्ते प्रयुक्तं शुचिरन्तं निनीषतीति पदत्रयं पूर्वत्र सर्वत्रान्वेति ॥ २९ ॥

उपमा—

**विरुद्धेनोपमानेन देशकालक्रियादिभिः ।**
**उपमेयस्य यत् साम्यं गुणलेशेन सोपमा ॥ ३० ॥**

देशकालक्रियाजातिस्वरूपस्वभावैर्भिन्नेन केनचिद्वस्तुना अन्यस्य कस्यचिद्वस्तुनः केनचित् गुणेन यत् साम्यं भवति सोपमा । 'सादृश्यमुपमा भेदे'

इत्युक्तं भवति । न हि चन्द्र इव चन्द्र इत्युपमा भवति । काव्याधिकाराच्चम-त्कारित्वलाभेन घट इव पटो द्रव्यमिति नोपमा ॥ ३० ॥

इयमुपमा सादृश्यवाचकशब्दश्रवणाश्रवणाभ्यां द्वेधा भिद्यते । तत्राद्यमु-दाहरिष्यन् सादृश्यवाचकौ शब्दौ प्रतिपादयति —

**यथेवशब्दौ सादृश्यमाहतुर्व्यतिरेकिणोः ।**

व्यतिरेकिणोः मुखचन्द्रयोरिव परस्परं भिन्नयोः ।

इवशब्दवतीं यथाशब्दवतीं चोपमां क्रमेणोदाहरति—

**दूर्वाकाण्डमिव श्यामं तन्वी श्यामा लता यथा ॥ ३१ ॥**

आद्यवाक्ये शुकशरीरादि यत्किञ्चिदुपमेयमध्याहार्यम् । ननु यथेवशब्दावि-त्युक्तत्वात् प्रथमं यथावत्या उपमाया उदाहरणमुचितम् । सत्यम् । किन्तु त-थाशब्दानुसन्धानसापेक्षयथाशब्दापेक्षयाऽनन्यापेक्षं सादृश्यमुपस्थापयन्निवश-ब्दः उपमावाचकेषु मुख्य इत्यभिप्रायः । कथ तर्हि यथेवशब्दाविति । वृ-त्तानुरोधात् । इवयथाशब्दाविति वृत्तभङ्गः स्यात् ॥ ३१ ॥

द्वितीयामुपमां निरूपयति—

**विना यथेवशब्दाभ्यां समासाभिहिता परा ।**
**यथा कमलपत्राक्षी शशाङ्कवदनेति च ॥ ३२ ॥**

अपरा पूर्वोक्तविलक्षणा उपमा । यदि न वाचकौ शब्दौ श्रूयेते कथं तत्प्रती-तिः । अत्रोक्तं समासेति । कमलपत्रमिव अक्षि शशाङ्क इव वदनं यस्याः ॥ ३२

एवमत्र यथेवशब्दयोरश्रवणमात्रम् । न तु तदर्थे शब्दान्तरागमः । सो-ऽपि तु क्वचिदस्ति । तेनास्त्यन्य उपमाभेदः । स उच्यते—

**वतिनापि क्रियासाम्यं तद्वदेवाभिधीयते ।**

वतिः 'तेन तुल्यं क्रिया चेद्वतिः' इति विहितस्तद्धितः । अत्र क्रियाकृतमे-व साम्यमिति च विशेषः । तद्वदेवेति पूर्वोक्तसमुच्चयाभिप्रायम् ।

अत्रोदाहरणम्—

**द्विजातिवदधीतेऽसौ गुरुवच्चानुशास्ति नः ॥ ३३ ॥**

असौ राजन्यः ब्राह्मणवदधीते ॥ ३३ ॥

अथायमन्य उपमाभेदः यत्र सादृश्यवाचकशब्दश्च न श्रूयते सादृश्यं

च प्रतीयते—

**समानवस्तुन्यासेन प्रतिवस्तूपमोच्यते ।**
**यथेवानभिधानेऽपि गुणसाम्यप्रतीतितः ॥ ३४ ॥**

सदृशं वस्तु न्यस्यते न तु सादृश्यवाचकमुपादीयते । सा प्रतिवस्तूपमा । गुणान्तरविशिष्टं समानं वस्तु प्रतिवस्तु । वाचकाभावे कथं सादृश्यप्रतीतिरिति शङ्कानुभाषणं यथेति । वाक्यभेदादत्र समासवत्योर्नावकाशः । तेनोक्तं यथेवेति । शङ्कापरिहारः गुणेति ॥ ३४ ॥

ननु किमिदं गुणसाम्यप्रतीतिरिति । तदुच्यते—

**साधुसाधारणत्वादिर्गुणोऽत्र व्यतिरिच्यते ।**
**स साम्यमापादयति विरोधेऽपि तयोर्यथा ॥ ३५ ॥**

उपमान्तरे उपमानोपमेयोभयवृत्तिरेको धर्मः सादृश्यप्रयोजकः । अत्र पुनः स व्यतिरिच्यते । भिन्न इत्यर्थः । यथा वक्ष्यमाणोदाहरणे । तत्र हि साधुसाधारणश्रीत्वमुपमेयधर्मः स्वादुपाकफलानम्रत्वमुपमानधर्म इति व्यतिरेकः स्फुटः । एवं गुणस्य विरोधेऽपि मिथो भेदेपि स गुणः तयोः उपमानोपमेयभूतयोर्वस्तुप्रतिवस्तुनोः साम्यं प्रत्याययति ॥ ३५ ॥

यथा—

**कियन्तः सन्ति गुणिनः साधुसाधारणश्रियः ।**
**स्वादुपाकफलानम्राः कियन्तो वाऽध्वशाखिनः ॥ ३६ ॥**

साधूनां सतां साधारण्यः स्वामिवत् यथेच्छं भोग्याः सम्पदो येषाम् । स्वादुपाकैः फलैः समन्तान्नम्राः । अत्र मिथो भिन्नावपि साधुसाधारणश्रीत्वस्वादुपाकफलानम्रत्वरूपौ धर्मौ बिम्बप्रतिबिम्बभावेनाभिन्नाविव भवन्तौ स्वाश्रयभूतानां गुणिनामध्वशाखिनां च सादृश्यमापादयतः । एवं ग्रन्थकाराभिप्रायः । अर्वाञ्चस्तु साधुसाधारणश्रियो गुणिन उपमेयम् । स्वादुपाकफलानम्राअध्वशाखिन उपमानम् । कियन्त इत्यनेनोक्तं विरलत्वं सामान्यधर्मः । तस्योपमाने उपमेये च पृथक्पृथगुपादानात् प्रतिवस्तूपमा । वस्तुनि वस्तुनि सादृश्यप्रयोजकधर्मकथनादिति मन्यन्ते ॥ ३६ ॥

नन्वन्यत्र प्रकारान्तरेणाप्युपमा विभज्यते । तथा कस्मादिह न क्रियते। अत्र प्रतिपद्यते—

**यदुक्तं त्रिप्रकारत्वं तस्याः कैश्चिन्महात्मभिः ।**
**निन्दाप्रशंसाचिख्यासाभेदादत्राभिधीयते ॥ ३७ ।**

त्रयाणामपि प्रकाराणां दण्डयुक्तान्युदाहरणानि । महात्मभिरिति सोल्लुण्ठनम् । अनपेक्षितविस्तरकारिभिर्वाचाटैरित्याशयः ॥ ३७ ॥

किमभिधीयते । इदम्—

**सामान्यगुणनिर्देशात्त्रयमप्युदितं ननु ।**

न हि द्रव्यं गुणः कर्म सामान्यमिति पदार्थान् विभज्य पुनर्घटपटाद्यात्मना विभागविस्तरोऽपेक्षित इति भावः ।

एवं प्रकारान्तरेण विभागोऽपि न श्रेयानित्यभिप्रेत्याह—

**मालोपमादिः सर्वोऽपि न ज्यायान्विस्तरो मुधा ॥ ३८ ॥**

अस्या उपमायाः केचिद्दोषा अन्यैरभिदधिरे । तत्र स्वाभिप्रायं विवक्षन्नाह-

**हीनताऽसंभवो लिङ्गवचोभेदो विपर्ययः ।**
**उपमानाधिकत्वं च तेनासदृशतापि च ॥ ३९ ॥**
**त एत उपमादोषाः सप्त मेधाविनोदिताः ।**
**सोदाहरणलक्ष्माणो वर्ण्यन्तेऽत्र च ते पृथक् ॥ ४० ॥**

अस्मिंश्च ग्रन्थे ते विविच्य वर्ण्यन्ते । लक्ष्म लक्षणम् । वक्ष्यमाणवत् लिङ्गवचोभेदाविति युक्तम् ॥ ४० ॥

तत्र हीनताया उदाहरणम्—

**स मारुताकम्पितपीतवासा बिभ्रत्सलीलं शशिभासमब्जम् ।**
**यदुप्रवीरः प्रगृहीतशार्ङ्गः सेन्द्रायुधो मेघ इवावभासे ॥ ४१ ॥**

अब्जः शङ्खः ॥ ४१ ॥

अत्र लक्षणसमन्वयः—

**शक्रचापग्रहादत्र दर्शितं किल कार्मुकम् ।**
**वासःशङ्खानुपादानाद्धीनमित्यभिधीयते ॥ ४२ ॥**

उपमानं यदुप्रवीरः । तत्र वासः शङ्खः चाप इति त्रीण्युपात्तानि । उपमेयं मेघः । तत्र सेन्द्रायुध इति कार्मुकमेकं केवलमुपात्तम् । न वासश्शङ्खसा-

नापन्नं किञ्चित् । तस्माद्धीनमिति । किलेत्यनादरे ॥ ४२ ॥

अनादरे हेतुमाह—

**सर्वं सर्वेण सारूप्यं नास्ति भावस्य कस्यचित् ।**
**यथोपपत्ति कृतिभिरुपमा सुप्रयुज्यते ॥ ४३ ॥**

कस्यचिद्वस्तुनः सर्वेण वस्त्वन्तरेण येनकेनापि वस्तुनेति हृदयम् सर्वं सारूप्यं सर्वप्रकारं सादृश्यं नास्ति न सम्भवति । कथं तर्हि । यथोपपत्ति येनैव केनचित् प्रकारेण सारूप्यं उपपद्यते सम्भवति तेन प्रकारेण कृतिभिरुपमा काव्येषु प्रयुज्यते । यतस्ते कृतिनः तस्मात्तैरल्पेनापि साधारणधर्मयोगेन प्रयुक्ता उपमा चमत्कारिणी भवति । तदुच्यते सुप्रयुज्यते । यद्वा उपमासु कृतिभिर्यथोपपत्ति सारूप्यं प्रतिपाद्यते इति योज्यम् ॥ ४३ ॥

तदेतन्निदर्श्य उपपादयति—

**अखण्डमण्डलः क्वेन्दुः क कान्ताननमद्युति ।**
**यत्किञ्चित्कान्तिसामान्याच्छशिनैवोपमीयते ॥ ४४ ॥**

कान्तेति । कामिन इयं कान्ता भवति । न पुनस्तथैव वस्तुतत्त्वमिति । एवकारेण पूर्वार्धोक्तदूरान्तरत्वकृतमयुक्तत्वमाह ॥ ४४ ॥

तदेवं हीनत्वमुपमादोष इत्यत्र नास्त्युपपत्तिरिति न्यरूपि । अथ प्राचामपि नात्र सम्मतिरित्युच्यते—

**किं च काव्यानि नेयानि लक्षणेन महात्मनाम् ।**
**दृष्टं वा सर्वसारूप्यं राजमित्रे यथोदितम् ॥ ४५ ॥**

ये महात्मानः अभिज्ञाः तेषां यल्लक्षणं काव्यमभिमतं तेन लक्षणेन इदं साधु काव्यं इदमसाध्विति निर्णेतव्यम् । किमतो यद्येवम् । इदमतः । न सर्वसारूप्यमुपमायामादर्तव्यम् । कथम् । न हि प्राचां काव्येषु सर्वसारूप्यमुपमायां दृश्येत । दृष्टं वा न दृष्टमित्यर्थः । यथा राजमित्रकृते काव्ये—

**सूर्यांशुसम्मीलितलोचनेषु दीनेषु पद्मानिलनिर्मदेषु ।**
**साध्व्यः स्वगेहेष्विव भर्तृहीनाः केका विनेशुः शिखिनां मुखेषु ॥**

अत्रोपमेये शिखिनां मुखानि सविशेषणानि । नोपमाने गेहानि । न च कश्चिदुपमालक्ष्म्या ह्रासः । तन्न सर्वसारूप्यमादर्तव्यम् ॥ ४६ ॥

अथासम्भवः—

**निष्पेतुरास्यादिव तस्य दीप्ताः**
**शरा धनुर्मण्डलमध्यभाजः ।**
**जाज्वल्यमाना इव वारिधारा**
**दिनार्धभाजः परिवेषिणोऽर्कात् ॥ ४७ ॥** (शाखावर्धनस्य ।)

कथमिहासम्भवः । तदभिधीयते—

**कथं पातोऽम्बुधाराणां ज्वलन्तीनां विवस्वतः ।**
**असम्भवादयं युक्त्या तेनासम्भव उच्यते ॥ ४८ ॥**

नह्यम्बुधारा नाम ज्वलन्ति विवस्वतः पतन्ति वा । तेन युक्त्या अस्य निबद्धस्यार्थस्यासम्भवादयं असम्भव उच्यते ॥ ४८ ॥

अत्रोच्यते—

**तत्रासम्भविनाऽर्थेन कः कुर्यादुपमां कृती ।**
**को नाम वह्निनौपम्यं कुर्वीत शशलक्ष्मणः ॥ ४९ ॥**

यदुक्तमसम्भव उपमादोष इति तत्रोच्यते । न हि भ्रान्तो यत्किञ्चनभाषी वा काव्याय घटते । अपि तु पर्यायतत्त्वज्ञोऽतिनिपुणमतिः । स कथमसम्भविनमर्थमादायोपमां प्रयुञ्जीत येन नैवं कर्तव्यमित्युपदिश्येत । न हि कुकवेरपि कश्चित् शरच्चन्द्रवर्णने संरभमाणः तमोपहत्वेन वह्न्यौपम्यं चन्द्रमसः कुर्वीत । प्रागेव तु कृती ॥ ४९ ॥

नन्वस्ति लोके सङ्कथा यथा सुप्रीह्यमाण एव कश्चित् प्रहर्तारमाह कथं प्रहरसीवेति -इति । तादृगिदं भवति । प्रदर्शितैव हि केनचित् प्रसिद्धेन कविना प्रयुक्ताऽसम्भविन्युपमा । तत्र कथं कः कुर्यादिति विस्रब्धमसम्भावनाऽभिधीयते । नैतदेवम् । नात्रासम्भवः । कथम् । उच्यते—

**यस्यातिशयवानर्थः कथं सोऽसम्भवो मतः ।**

यदि ह्यर्काद्वारिधाराः पतन्ति ते च जाज्वल्यन्ते इतीममर्थं वास्तवं कृत्वा सादृश्यमिह वक्तुमिष्येत ततः स्यादुपालम्भः । न चैवमिष्यते । किन्तर्हि । यद्यर्काद् वारिधाराः पतेयुः ते च जाज्वल्यमाना भवेयुः तादृशाः शरा इति । एवमसदर्थकल्पनया को लाभः । श्रूयताम् । निष्पततां शराणां तीव्रपातित्वं सानुबन्ध-

पातित्वं अलङ्घ्ययत्वं च प्रतिपादनीयम् । सोऽयमतिशय इह उपमार्थः । न ह्ययं न सम्भवतीति वक्तुं शक्यते । तदेवं यस्यासम्भवो न सोऽर्थो विवक्षितः । यस्तु विवक्षितः सोऽर्थो नासम्भवीति निर्निमित्त उपालम्भ इत्युक्तं भवति । शब्दार्थस्तु यस्योपमानविशेषस्य अतिशयवान् उपमेयविशेषः अर्थः तात्पर्यविषयः स उपमानविशेषः कथं सम्भवशून्य इति मन्यत इति ।

न केवलमेवमुपमायां किन्तु अलङ्कारान्तरेऽपि अतिशयविवक्षया असम्भवतोऽर्थस्य निबन्धनम् । क । उच्यते—

**इष्टञ्चातिशयार्थत्वमुपमोत्प्रेक्षयोर्यथा ॥ ५० ॥**

चकारोऽसन्देहे । उपमोत्प्रेक्षयोः न केवलमुदाहृतपूर्वायामुपमायां किन्तूत्प्रेक्षायामपीति ॥ ५० ॥

सेयमुदाह्रियते । यथा—

**पुञ्जीभूतमिव ध्वान्तमेष भाति मतङ्गजः ।**
**सरः शरत्प्रसन्नाम्भो नभःखण्डमिवोज्झितम् ॥ ५१ ॥**

भातीत्युत्तरत्रापि सम्बध्यते । अत्र मतङ्गजे पुञ्जीभूतध्वान्ततादात्म्यस्योत्प्रेक्षा । प्रसन्नाम्भसि सरसि भूतलस्थितनभःखण्डतादात्म्यस्य । न च ध्वान्तस्य पुञ्जीभवनं नभःखण्डस्य भूमावुज्झितत्वं वा सम्भाव्यते । तथाऽपि निबन्धनं क्रियते । न च किञ्चिद्दुष्यति । अतिशयार्थत्वान्निबन्धनस्य । तथा प्रकृतेऽपि प्रत्येतव्यमिति ॥ ५१ ॥

अथ लिङ्गवचनभेदविपर्ययाः—

**अथ लिङ्गवचोभेदावुच्येते सविपर्ययौ ।**
**हीनाधिकत्वात् स द्वेधा त्रयमप्युच्यते यथा ॥ ५२ ॥**

हीनविपर्ययः अधिकविपर्यय इति विपर्ययो द्वेधा । लिङ्गभेदो वचनभेदो विपर्यय इति दोषत्रयमप्युदाह्रियते ॥ ५२ ॥

तत्र लिङ्गवचनभेदावेकस्मिन् श्लोके प्रदर्श्येते । अत एव हि तयोर्द्वन्द्वः—

**अविगाह्योऽसि नारीणामनन्यमनसामपि ।**
**विषमोपलभिन्नोर्मिरापगेवोत्तितीर्षतः ॥५३ ॥**

अविगाह्य इति । सर्वशक्त्यापि प्रयतमानाभिरनुत्पाद्यविकार इत्यर्थः । अत्रो-पमेये अविगाह्योऽसीत्यनेनाक्षिप्तो युष्मदर्थः पुमान् । उपमाने आपगा स्त्रीति लिङ्गभेदः । नारीणां उत्तितीर्षित इति तु लिङ्गभेदो वचनभेदश्च ॥ ५३ ॥

अथ हीनविपर्ययः—

काचिदग्रे प्रसरता काचिदापत्य निघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥ ५४ ॥

अत्र महावीरस्य निहीनः श्वा उपमानीकृतः ॥ ५४ ॥

अथाधिकविपर्ययः—

अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥ ५५ ॥

अत्र पक्षिणःसकलभुवननिर्माणनिपुणो भगवान् कमलासन उपमानीकृतः ॥५५

लिङ्गभेदे शङ्कते—

ननूपमीयते पाणिः कमलेन विकासिना ।
अधरो विद्रुमच्छेदभासा बिम्बफलेन च ॥ ५६ ॥

पाणिकमलयोः अधरविद्रुमच्छेदभासोः अधरबिम्बफलयोश्च लिङ्गभेदस्तावद-स्ति । अत्र चोपमा सर्वैः प्रयुज्यते । तत्कथं लिङ्गभेद उपमादोष इति ॥ ५६ ॥

अत्र समाधिः—

उच्यते काममस्तीदं किं तु स्त्रीपुंसयोरयम् ।
विधिर्नाभिमतोऽन्यैस्तु त्रयाणामपि नेष्यते ॥ ५७ ॥

पाणिकमलाद्युपमानं काममस्ति । न तत्र लिङ्गभेददोष उच्यते । कुत्र तर्हि । यत्र स्त्रीपुंसयोरुपमानोपमेयभावः । पाण्यधरौ हि पुमांसौ । कमलबिम्बफले तु क्लीबे इति न दोषः । ननु विद्रुमच्छेदभाः स्त्री । अधरः पुनः पुमान् । सत्यम् । अत एव तत्र दोषोऽस्त्येव । कथं तर्हि तदङ्गीकारः । न कश्चिदङ्गीकरोति । काममस्तीदमिति वदतः कमलबिम्बफलोपमानभावमात्रे तात्पर्यात् । यद्वा विद्रुमच्छेदभासा युक्तोऽधरश्च बिम्बफलेनोमीयत इति पुन्नपुंसकोपमानोपमेय-भावोदाहरणद्वयमात्रं दर्शितम् । विद्रुमच्छेदभासीत्येव वा पठितव्यम् । विद्रुमच्छेदवद्भासमानेन बिम्बफलेनेति वा योजना । अधरो यथा पुंसा

विद्रुमच्छेदेनोपमीयते तद्वत् तत्समकान्तिना क्लीबेन बिम्बफलेनाप्युपमीयत इत्यभिप्रायः । अन्यैस्तु त्रयाणामपि लिङ्गानां परस्परमुपमानोपमेयभावो नेष्यते । पाणिकमलादिषु विद्यमानोऽपि स दोषः प्रौढप्रयोगपरम्पराप्रसिद्धतया न झटित्याविरस्ति । न तद्दृष्ट्वा स्वयमप्येवं लिङ्गभेदेन व्यवहर्तव्यम् । यथा चन्दनो जलमिव शीतल इति ॥ ५७ ॥

अथोपमानाधिकम्—

**स पीतवासाः प्रगृहीतशार्ङ्गो**
**मनोज्ञभीमं वपुराप कृष्णः ।**
**शतह्रदेन्द्रायुधवान्निशायां**
**संसृज्यमानः शशिनेव मेघः ॥ ५८ ॥ रामशर्मणः**

कथमिहाधिकता । उच्यते—

**शशिनो ग्रहणादेतदाधिक्यं किल न ह्ययम् ।**
**निर्दिष्ट उपमेयेऽर्थे वाच्यो वा जलजोऽत्र तु ॥ ५९ ॥**

कृष्ण उपमेयः । तद्वपुषो मनोज्ञत्वकारि पीतवासस्त्वं भीमत्वकारि प्रगृहीतशार्ङ्गत्वञ्च विशेषणमुपात्तम् । मेघ उपमानम् । तत्रोपमेयविशेषणद्वयस्थानापन्नं शतह्रदावत्त्वमिन्द्रायुधवत्त्वञ्चेति विशेषणद्वयमुपात्तम् । यत्पुनरत्र तृतीयं विशेषणमुपादीयते शशिना संसृज्यमान इति तदधिकं भवति । न ह्येतत्स्थानापन्नः कश्चिदर्थ उपमेये निर्दिष्टः । तस्माच्छशिसंसर्गो नोपादेयः । उपमेये शङ्खससंर्गो विवक्षित इति चेत् स चात्र वाच्यः यथा शशिसंसर्गस्तत्र । अयं भावः । यदि वा यथोपमेये शङ्खसंसर्गो नोच्यते तथोपमानेऽपि शशिसंसर्गो न वक्तव्यः । यदि वा यथोपमाने शशिसंसर्ग उच्यते तथोपमेयेऽपि शङ्खसंसर्गो वक्तव्यः । न त्वेकत्रोच्यते अन्यत्र गम्यत इति युक्तमिति । किलेत्येतदनङ्गीकारे ॥ ५९ ॥

तदाह—

**न सर्वसारूप्यमिति विस्तरेणोदितो विधिः ।**
**अभिप्रायात् कवेर्नात्र विधेया जलजे मतिः ॥ ६० ॥**

उपमाया यो विधिः प्रकारः स्वरूपमिति यावत् स विस्तरेण प्रतिपादितः । अनुबन्धः ।

कथमिति । सर्वांशसारूप्यात्मा न भवतीति । तस्माच्छशिसंसर्गांशसारूप्याभावेऽप्युपमेयस्य नास्ति दोष इति । ननु न ब्रूमः सर्वांशसारूप्यमुपमेति । किन्तु यावत्यंशे सादृश्यमभिमतं तावति तस्याभावो दोषमावहतीति । तथाचाभिप्रेतस्य शशिसंसर्गसारूप्यस्योपमेये जलजावचनेनाप्रतीतिरुपमा दोषवतीति । नेत्युच्यते । न तस्मिन्नंशे सारूप्यमभिप्रेतम् । अन्यथा नूनमुपमेये जलजोऽवक्ष्यत । न चोक्तः । तस्मादत्र मा जलजे बुद्धिर्भूदिति कविरभिप्रैतीति गम्यते । तस्मात्तत्र मतिर्न कार्येति । एवं सति शशिना संसृज्यमान इति विशेषणस्यापुष्टार्थत्वं कथञ्चित् परिहर्तव्यम् ॥ ६० ॥

उपमानस्याधिकत्वं द्वेधा सम्भवि । सादृश्यप्रयोजकविशेषणवत्त्वेन उपमानस्यानेकत्वेन च । आद्यमुक्तम् । अन्त्यमपि न दोषायेत्याह—

**आधिक्यमुपमानानां न्याय्यं नाधिकता भवेत् ।**
**गोक्षीरकुन्दहलिनां विशुद्ध्या सदृशं यशः ॥६१॥**

आधिक्यमनेकसङ्ख्यत्वम् । अधिकता दोषावहता । गोक्षीरादीनि बहून्युपमानान्येकस्य यशसः । विशुद्धेः सादृश्यप्रतियोगित्वेऽपि तात्पर्यगत्या तान्येवोपमानानीति ॥ ६१ ॥

अत्राह—

**एकेनैवोपमानेन ननु सादृश्यमुच्यते ।**

काममुच्यताम् । अपरेणापि तद्वक्ष्यते । को दोषः । उच्यते—

**उक्तार्थस्य प्रयोगो हि गुरुमर्थं न पुष्यति ॥ ६२ ॥**

अपुष्टार्थत्वं पौनरुक्त्यं च दोष इति । अस्य प्रत्यवस्थानस्य परिहारग्रन्थो नोपलभ्यते । त्रुटित इति भाति । न चैतन्मन्तव्यम्— आधिक्यमुपमानानामित्यनेन पूर्वपक्षं कृत्वाऽनेन स्वसिद्धान्तमाहेति । दोषानङ्गीकारशीलो हि ग्रन्थकारः । स इह दोषमङ्गीकरोतीति वचनं नातीव श्रद्धेयम् । सन्ति चोपमानानेकत्वस्यालङ्कारिकाङ्गीकृततां प्रतिपादयन्तः प्रामाणिकाः । यदुक्तं रहस्यशिखामणौ 'काष्ठपाषाणसन्निभं' इत्येतद्व्याचक्षाणेन भगवता वेङ्कटनाथेन—

उद्यानपत्रिका-

*तर्हि, एक एव दृष्टान्तः किं नालमिति चेत् साधर्म्येऽतिशयप्रतीतयेऽनेकं दृष्टान्तं वक्तुमुचितमित्यालङ्कारिका आचचक्षिरे ।

इति । न चैवमर्थो ग्रन्थ इह उपलभ्यते । नाप्यन्यत्रेत्यत्रत्यमेवैवमर्थकं ग्रन्थं त्रुटितमुत्पश्यामः । कथञ्चिद्वाऽस्मिन्नर्थे स्थितो ग्रन्थो योजनीयः । तथाहि— 'न्याय्यं नाधिकता भवेत्' इत्येतदमृष्यमाण आह—

**एकेनैवोपमानेन ननु सादृश्यमुच्यते ।**

अत्र समाधिः—

**उक्तार्थस्य प्रयोगो हि गुरुमर्थं न पुष्यति ॥**

यदुच्यते एकेनैवोपमानेन सादृश्यवचनादुपमानान्तरमधिकमिति तत् तदा युज्येत यदि यत्सादृश्यमेकेनोपमानेनोच्यते तदेवापरेणोच्येत । तदा ह्युक्तार्थस्य प्रयोगो भवति । अर्थस्यापुष्टिश्च । न चैतदस्ति । किन्तु यशोनिष्ठस्य शुक्लिम्नः सामान्यरूपस्यैकेनैवाभिधानेऽपि तत्तदुपमानगतविशेषविशिष्टं सादृश्यं नैकेनैवाभिधातुं शक्यते । माधुर्यविशिष्टं हि सादृश्यं गोक्षीरेणोच्यते । मार्दवविशिष्टं कुन्देन । दुराधर्षत्वविशिष्टं हलिना । अत्रैकेनाभिधीयमानं कथमन्येनाभिधीयेत । तस्मान्नास्त्युक्तार्थस्य प्रयोगोऽपुष्टार्थता वा । एकेनैवोपमानेन तृप्तिमलभमानस्योपमानान्तराण्युपाददानस्य कवेः सादृश्यातिशये निर्भरो वेदितव्यः । तत्र कथमुक्तार्थतेति ॥ ६२ ॥

अथ चरम उपमादोषः तेनोपमानत्वाभिमतेनासदृशतेति—

**वनेऽथ तस्मिन् वनितानुयायिनः**
**प्रवृत्तदानार्द्रकटा मतङ्गजाः ।**
**विचित्रबर्हाभरणाश्च बर्हिणो**
**बभुर्दिवीवामलविग्रहा ग्रहाः ॥ ६३ ॥**

अथ तस्मिन् वने करिणीरनुगच्छन्तः प्रस्रुतेन मदजलेनार्द्रौ गण्डौ येषां त-

---

*ஆனாலுமொரு திருஷ்டாந்தமேயமையாதோவென்றில் ஸாதர்ம்யத்தில் அதிசயந்தோற்றுகைக்காக பல திருஷ்டாந்தஞ்சொல்லக்கடவதென்று ஆலங்காரிகர் சொன்னார்கள். 11 ரஹஸ்யங்கள் (சுண்டப்பாளையம் 1911) 111-ம் பக்கம்.

अनुबन्धः ।

थाभूता मतङ्गजाः विचित्रवर्हभूषणा मयूराश्च दिवि निर्मलवपुषो ग्रहा इ
बभुः । ॥ ६३ ॥

अत्रोच्यते—

**ग्रहैरपि गजादीनां यदि सादृश्यमुच्यते ।**
**तथाऽपि तेषां तैरस्ति कान्तिर्वाऽप्युग्रताऽपि वा ॥ ६४ ॥**

अपीत्युपमानत्वासम्भवानुवादः । गजादीनां ग्रहैः सादृश्यमस्ति न तु नास्ति किन्तत् सादृश्यम् । कान्तिरूपं वा उग्रतारूपं वा । न हि नीलानां ज्योतिः समानकान्तित्वमसम्भवि । कालाम्बुदश्यामलस्य भगवत आप्रणखात् सर्वस्य सुवर्णरूपत्वश्रवणात् । 'कश्चिन्न तद्धेमसमानवर्णं तस्याननं' इति महर्षिवच नाच्च । तस्मादयमदोषः ॥ ६४ ॥

**इत्युक्त उपमाभेदो वक्ष्यते चापरः पुनः ।**
**उपमादेरलङ्काराद्विशेषोऽन्योऽभिधीयते ॥ ६५ ॥**

रूपकं दीपकोपमे इति निर्दिष्टेषु चरमाया उपमाया भेद एवमुक्तः । अपरो ऽप्यस्य भेदोऽनन्तरे परिच्छेदे वक्ष्यते । य एते रूपकादयोऽलङ्कारा उक्तास्ते भ्योन्येऽलङ्कारविशेषा इदानीमभिधीयन्ते । 'रूपकं दीपकोपमे'इत्येतत् प्राति लोम्येन बुद्धावारोप्योक्तं उपमादेरिति । एकत्वमतन्त्रम् ॥ ६५ ॥

**आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना ।**
**समासातिशयोक्ती च षडलङ्कृतयोऽपराः ॥ ६६ ॥**
**वक्ष्यमाणोक्तविषयस्तत्राक्षेपो द्विधा मतः ।**
**एकरूपतया शेषा निर्देक्ष्यन्ते यथाक्रमम् ॥ ६७ ॥**

तेषु षट्स्वाक्षेपो द्विविधः वक्ष्यमाणविषय उक्तविषयश्चेति । अन्ये सर्व एक रूपाः ॥ ६६ ॥ ६७ ॥

तत्राक्षेपो निरूप्यते—

**प्रतिषेध इवेष्टस्य यो विशेषाभिधित्सया ।**
**आक्षेप इति तं सन्तः शंसन्ति द्विविधं यथा ॥ ६८ ॥**

इष्टस्य यः प्रतिषेध इव । न तु प्रतिषेध एव । प्रातीतिकः प्रतिषेध इत्यर्थः किमर्थमेवं प्रतिषेधः । विशेषाभिधानाय । विवक्षितस्य कञ्चिद्विशेषं प्रति

उद्यानपतिका

पादयितुम् । तं आक्षेप इति काव्यज्ञाः शंसन्ति । तं च द्विविधं शंसन्ति । द्विविधो यथेति तु श्रेयान् पाठः ॥ ६८ ॥

तत्र वक्ष्यमाणविषयो यथा—

**अहं त्वा यदि नेक्षेय क्षणमप्युत्सुका ततः ।**
**इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण ते ॥ ६९ ॥**

वियोगनिस्सहा प्रवासप्रसक्तं प्रियमाह । तत्र क्षणमपि यद्यहं त्वां न पश्येयं ततो बलवदुत्कण्ठिता सती 'इत्यभिधाय जीवितसंशयमेष्यामीति वाक्यशेषस्य वक्तव्यस्यावक्तव्यत्वरूपं प्रतिषेधमभिप्रेत्याह इयदिति । इयदपरिपूर्णं वचनमेव पर्याप्तम् । उक्ततोऽन्यद् यद् वक्तव्यं तत्तवाप्रियम् । तेनोक्तेन किम् । सोऽयं वक्तव्यवचनप्रतिषेधः स्वीयजीवितसंशयस्योत्कटत्वरूपं विशेषं प्रतिपादयति ॥ ६९ ॥

अथोक्तविषयः—

**स्वविक्रमाक्रान्तभुवश्चित्रं यन्न तवोद्धतिः ।**
**को वा सेतुरलं सिन्धो र्विकारकरणं प्रति ॥ ७० ॥**

स्वविक्रमेण भुवमाक्रान्तवतस्तव यन्न दर्पः तच्चित्रमित्युक्तस्य विकारहेतौ सति यन्न विकारस्तद्गतचित्रत्वस्य धीरा एवमेव भवन्ति तत्र किं चित्रमिति प्रतिषेधमभिप्रेत्योच्यते को वेति । तदयमुक्तविषय आक्षेपः । को वा हेतुरिति तु भावितुं युक्तम् ॥ ७० ॥

अथार्थान्तरन्यासः—

**उपन्यसनमन्यस्य यदर्थस्योदिताहते ।**
**ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यथा ॥ ७१ ॥**

उदितात् उक्तात् प्रकृतादर्थादन्यस्यार्थस्य यदुपन्यसनं सोऽर्थान्तरन्यासः । नन्वेवमसम्बद्धप्रलापिता प्राप्नोति । नेत्युच्यते । पूर्वार्थानुगतो हि सोऽन्यस्यार्थस्योपन्यासोऽर्थान्तरन्यासो नाम । पूर्वेणार्थेनानुगतः उपपादकतया सम्बद्ध इति । 'पूर्वार्थानुगतौ' इति युक्ततरम् ॥ ७१ ॥

यथा—

**परानीकानि भीमानि विविक्षोर्न तव व्यथा ।**
**साधु वाऽसाधु वाऽऽगामि पुंसामात्मैव शंसति ॥ ७२ ॥**

अनुबन्धः ।

न व्यथा । जयस्य निश्चयात् । कथं निश्चयः । तदुच्यते साधु वेति ॥ ७२

अयमर्थान्तरन्यासो द्विविधः प्रतीयमानहेतुभावो हिशब्दाभिहितहेतुभावश्चेति । आद्य उक्तः । अन्त्यमाह—

**हिशब्देनापि हेत्वर्थप्रथनादुक्तसिद्धये ।**
**अयमर्थान्तरन्यासः सुतरां व्यज्यते यथा ॥ ७३ ॥**

अपिः प्रकारान्तरसमुच्चये । उक्तस्य प्रकृतस्य सिद्धये हेतुरूपमर्थं प्रथयन् हिशब्दः सुतरामर्थान्तरन्यासं व्यनक्ति ॥ ७३ ॥

यथा—

**वहन्ति गिरयो मेघानभ्युपेतान्गुरूनपि ।**
**गरीयानेव हि गुरून्बिभर्ति प्रणयागतान् ॥ ७४ ॥**

अभ्यागतान् मेघान् गुरूनपि गिरयो वहन्ति । नान्यः कश्चित् । यस्माद् गुरुतर एव गुरून् भर्तुं शक्तः नान्यः । न च गिरिभ्योऽन्यः कश्चित् तथा गुरुतरः । यद्वा यद्गिरयो वहन्ति तद्युक्तम् । यस्माद् गरीयानेव गुरून् बिभर्तीति ॥ ७४ ॥

अथ व्यतिरेकः—

**उपमानवतोऽर्थस्य यद्विशेषनिदर्शनम् ।**
**व्यतिरेकं तमिच्छन्ति विशेषापादनाद्यथा ॥ ७५ ॥**

उपमानमुपादाय कस्यचिदर्थस्योपमेयभूतस्य तदपेक्षया यदाधिक्यप्रदर्शनं तं व्यतिरेकनामानमलङ्कारमलङ्कारविद इच्छन्ति । कस्मात् । विशेषापादनात् व्यतिरेक इति नाभाव उच्यते । न हि स एवैको व्यतिरेकशब्दार्थः । 'अयमस्माद् व्यतिरिच्यते' इति विशिष्यत इति तात्पर्येण प्रयोगात् विशेषोऽपि तस्यार्थः । तस्य करणादलङ्कारोऽपि व्यतिरेक इति ॥ ७५ ॥

यथा—

**सितासिते पक्ष्मवती नेत्रे ते ताम्रराजिनी ।**
**एकान्तशुभ्रश्यामे तु पुण्डरीकासितोत्पले ॥ ७६ ॥**

उपमानभूतैकान्तशुभ्रश्यामपुण्डरीकासितोत्पलापेक्षया सितासितारुणयोर्नेत्रयोरिह विशेषः प्रतीयते । ताम्रमरुणं यथा तथा राजितुं शीलमनयोः ताम्रराजिनी । पुण्डरीकमिह सिताम्भोजम् । वेदाविदस्तु रक्ताम्बुजमाहुः ॥ ७६ ॥



उद्यानपत्रिका-

अथ विभावना—

**क्रियायाः प्रतिषेधे या तत्फलस्य विभावना।**
**ज्ञेया विभावनैवासौ समाधौ सुलभे सति ॥ ७७ ॥**

कारणीभूतां क्रियां प्रतिषिध्य या तस्याः क्रियायाः फलस्य विभावना प्रत्यायना प्रतिपादनेति यावत्। असौ यथार्था विभावनैव ज्ञेया। किन्तु कथं कारणाभावे कार्योत्पत्तिरिति शङ्कायाः समाधानेन सुग्रहेण भवितव्यम्। अन्यथा विरोधशङ्काक्रान्तमानसतया चमत्कारभङ्गे पर्यवस्येत् ॥ ७७ ॥

यथा—

**अपीतमत्ताः शिखिनो दिशोऽनुत्कण्ठिताकुलाः।**
**नीपोऽविलिप्तसुरभिरभ्रष्टकलुषं जलम् ॥ ७८ ॥**

न पीताः शिखिनः अथापि मत्ताः। नोत्कण्ठिता दिशः अथाप्याकुलाः। न विलिप्ता मलयजेन नीपः अथापि सुरभिः। न भ्रष्टैमर्यादैर्जलम् अथापि कलुषम्। इति सर्वत्र कारणं प्रतिषिध्य फलं निबध्यते। प्रावृडिह सर्वत्र हेतुरिति समाधिः सुलभ इति ॥ ७८ ॥

अथ समासोक्तिः—

**यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः।**
**सा समासोक्तिरुद्दिष्टा संक्षिप्तार्थतया यथा ॥ ७९ ॥**

यस्मिन्नर्थे उक्तेऽन्योऽर्थो गम्यते। ननु कथमेकस्मिन्नर्थे उच्यमानेऽपरोऽर्थो गम्येत। उच्यते। तत्समानविशेषणत्वात्। उक्तस्यार्थस्य यानि विशेषणानि तानि चेदन्यस्यापि समानानि तानि तं गमयन्तीति। अत एव क्वचित् तत्समानैर्विशेषणैः इति पठ्यते। सा तादृशार्थसम्बन्धिन्युक्तिः समासोक्तिर्नाम कथ्यते। सङ्क्षेपार्थो हि समासशब्दः। तेनैकयोक्त्या ऽर्थद्वयस्य सङ्क्षेपात् समासेनोक्तिः समासोक्तिरिति। यत्रोक्तौ इति युक्ततरोऽन्यत्र पाठः। यस्यामुक्तावुक्तादन्योऽर्थो गम्यते सा समासोक्तिरिति ॥ ७९ ॥

यथा—

**स्कन्धवानृजुरव्यालः स्थिरोऽनेकमहाफलः।**
**जातस्तरुरयं चोच्चैः पातितश्च नभस्वता ॥ ८० ॥**

अव्यालः सर्परहितः। स्थिरः न वात्योत्खेयमूलः। अत्र गम्यमानोऽन्योऽर्थः क अनुबन्धः।

श्चिन्महापुरुषः । सोऽपि हि स्कन्धवान् बन्धुमान् वृषस्कन्धो वा ऋजुरकुटिलस्वभावः अव्यालो दुर्जनरहितः स्थिरोऽचञ्चलचेताः अनेकानि महान्ति फलान्यभिलषितार्था यस्मिंस्तथाभूतश्चेति । यौगपद्यार्थौ चकारौ ॥ ८० ॥

अथातिशयोक्तिः—

**निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम् ।**
**मन्यन्तेऽतिशयोक्तिं तामलंकारतया यथा ॥ ८१ ॥**

ननु लोकातिक्रान्तगोचरं वचो नोपादीयेत । नेत्युच्यते । न हि कवय उन्मत्ततया तथा भाषन्ते । किन्तर्हि । निमित्ततः विशेषाभिधित्सयेति ॥ ८१ ॥

यथा—

**स्वपुष्पच्छविहारिण्या चन्द्रभासा तिरोहिताः ।**
**अन्वमीयन्त भृङ्गालिवाचा सप्तच्छदद्रुमाः ॥ ८२ ॥**

अत्रातिरोहितानामपि तिरोहितत्वोक्तिर्धवलिमातिशयप्रतिपत्त्यर्था ॥ ८२ ॥

**अपां यदि त्वक्छिथिला च्युता स्यात्फणिनामिव ।**
**तदा शुक्लांशुकानि स्युरङ्गेष्वम्भसि योषिताम् ॥ ८३ ॥**

फणिनामिवासामपि यदि त्वक् शिथिला सती च्युता स्यात् तदा जले क्रीडन्तीनां योषितामङ्गेषु यान्यत्यन्तसूक्ष्माणि शुक्लानि वसनानि तानि स्युरिति सौक्ष्म्यातिशयाभिव्यञ्जनायोच्यते । ननु त्वक् शुक्लांशुकानि स्यादित्येकवचनेन भाव्यम् । तया त्वचा तान्यंशुकानि निष्पद्येरन्नित्यर्थाददोषः । अथवा 'पुनरावृत्तः स्वर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवतः' इतिवद्विधेयसामानाधिकरण्यमप्याख्यातस्य भवतीति ॥ ८३ ॥

इतीयमतिशयोक्तिर्द्वेधा दर्शिता । यदिमती तद्रहिता च । न तु पुनरेतावत्येवातिशयोक्तिः । किं पुनः—

**इत्येवमादिरुदिता गुणातिशययोगतः ।**
**सर्वैवातिशयोक्तिस्तु**

इत्येवमादिर्या या उक्तिर्वर्ण्यस्य गुणातिशययोगनिमित्ता काव्यबन्धस्य चारुत्वातिशयनिमित्ता वा उदिता भवति सा सर्वैव त्वातिशयोक्तिः ।

तर्हि ता अप्यतिशयोक्तयो वक्तव्याः । न वक्ष्यामः । कथम्—

अनुबन्धः ।

तर्कयेत् तां

अन्या अतिशयोक्तीः स्वयं तर्कयेत् । मार्गं हि लक्षणकाराः प्रदर्शयन्ति । न कार्त्स्न्ये यतन्ते ।

तर्कयंश्च नोच्छृङ्खलं तर्कयेत् । किन्तर्हि ।

यथागमम् ॥ ८४ ॥

यथाशास्त्रं यथासम्प्रदायमिति । तर्कितवन्तश्चैवमर्वाञ्चः । भेदेऽभेदोक्तिरभेदे भेदोक्तिरिति । एवं सम्बन्धासम्बन्धपौर्वापर्यविपर्यय इति ॥ ८४ ॥

इमां स्तुवन्नाह—

सैषा सर्वैव वक्रोक्तिरनयाऽर्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना ॥ ८५ ॥

वक्रोक्तिरलङ्कारः । 'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः' इति वचनात् । या निरूपिताऽतिशयोक्तिः सैव सर्वा वक्रोक्तिः सर्वोऽलङ्कारः । अनया अतिशयोक्तया काव्यार्थः रसचर्वणानुगुणविशदप्रतीतिगोचरीक्रियते । एतद्घटने कविना संरम्भः कार्यः । अनया विनाऽलङ्कार एव न भवति ।

अत्र केचिदेवमाचक्षीरन् । अतिशयोक्तिः सर्वोऽलङ्कार इति वचनात् अतिशयोक्तिविशेषा एव सर्वेऽन्येऽलङ्कारा इति । तत्तु न ग्राह्यम् । अतिशयोक्तिरिति पृथगलङ्कारनिरूपणात् । वक्रोक्तिभेदा ह्यलङ्कारा इष्यन्ते । न चोपमादीन् विहाय वक्रोक्तिं नाम कञ्चिदलङ्कारं ग्रन्थकारो निरूपयति । न हि विशेषविविक्तं सामान्यं सुनिरूपम् । तथाऽतिशयोक्तिमपि पृथङ् न न्यरूपयिष्यत् यदि सर्वालङ्कारसामान्यात्मत्वमतिशयोक्तेरभिमतमभविष्यत् । पृथङ्निरूपणात्तु ज्ञायते यथोपमादयोऽलङ्कारावशेषास्तथाऽतिशयोक्तिरपि कश्चिदलङ्कारविशेषो न तत्सामान्यात्मा । कथं तर्हि 'सैषा सर्वैव वक्रोक्तिः' इति । अभेदोपचारात् । अतिशयोक्तियुक्तो ह्यन्यः सर्वोऽलङ्कारःप्रायेणाधिकतरचमत्कारकारी भवति । आह चानन्दवर्धनः—'प्रथमं तावदतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया । कृतैव च सा महाकविभिः कामपि काव्यच्छायां पुष्यतीति । कथं ह्यतिशययोगिता स्वविषयौचित्येन क्रियमाणा सती काव्ये नोत्कर्षमावहेत् । भामहेनाप्यतिशयलक्ष्णे यदुक्तं सैषा सर्वेति

तत्रातिशयोक्तिर्यमलङ्कारमधितिष्ठति कविप्रतिभावशात् तस्य चारुत्वातिशययोगः अन्यस्यालङ्कारमात्रतैवेति सर्वालङ्कारशरीरस्वीकरणयोग्यत्वेनाभेदोपचारात् सैव सर्वालङ्काररूपेत्ययमेवार्थोऽवगन्तव्यः ।' इति ॥ ८५ ॥

अत्रान्यैः कैश्चिदुक्तानामलङ्काराणां अनलङ्कारतामाह—

**हेतुश्च सूक्ष्मो लेशोऽथ नालङ्कारतया मतः ॥**
**समुदायाभिधानस्य वक्रोक्त्यनभिधानतः ॥ ८६ ॥**

'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः' इति तावत् स्थितम् । लोकातिक्रान्तता च शब्दार्थयोर्वक्रता । सा यत्र नास्ति स कथमलङ्कारः । न च हेत्वाद्यलङ्कारवत्तयाऽभिमतेषु स्थलेषु वक्रता काचिदस्ति । तदेते नालङ्कारतया मताः । समुदायेनाभिधानं यस्य विवक्षितस्य वाक्यार्थस्य स समुदायाभिधानः तस्य तत्र वक्रोक्त्याऽनभिधानान्नालङ्कारतेति ॥ ८६ ॥

अत्र निदर्शनम्—

**गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।**
**इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते ॥ ८७ ॥**

सायंकालो ह्यत्र प्रतिपादयितुमिष्यते । तस्यार्कास्तमयाद्यभिधानेन प्रत्यायने कश्चमत्कारः । सर्वलोकव्यवहारसाधारणो ह्ययं कालनिवेदनक्रमः । तस्मान्नैषा लोकोत्तरकविप्रतिभाविलासापेक्षिणी वक्रोक्तिः । तत्र कुतोऽलङ्कारतेति । एवं सूक्ष्मलेशावपि । एवं सति यदाह दण्डी

हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम्

इति तद्भिन्नरुचित्वाल्लोकस्य ॥ ८७ ॥

अथान्यौ द्वावलङ्कारौ—

**यथासंख्यमथोत्प्रेक्षामलङ्कारद्वयं विदुः ।**

अत्रान्यस्यालङ्कारकारस्याभिप्रायमाह—

**संख्यानमिति मेधावी नोत्प्रेक्षाऽभिहिता क्वचित् ॥ ८८ ॥**

यथासङ्ख्यं सङ्ख्यानमिति मेधावी नामालङ्कारकारो व्यवहरति । उत्प्रेक्षायास्तु न क्वचित्तेनाभिधानम् । तस्या अलङ्कारता तस्यानभिमता भवेत् । यथासंख्यस्य व्यपदेशान्तरमपि दण्डिना क्रियते 'संख्यानं क्रम इत्यपि' इति । 'संख्यानमिति मेधाविनोत्प्रेक्षाऽभिहिता क्वचित्' इति तु पठ्यमानमनुपपन्नं भाति ॥ ८८ ॥

तत्र यथासंख्यम्—

**भूयसामुपदिष्टानामर्थानामसधर्मणाम् ।**
**क्रमशो योऽनुनिर्देशो यथासंख्यं तदुच्यते ॥ ८९ ॥**

प्रथमनिर्देश उपदेशः । 'पश्चान्निर्देशोऽनुनिर्देशः । स चार्थादर्थान्तराणाम्'। 'उपदिष्टानामेव ह्यनुनिर्देशे पौनरुक्त्यं स्यात्' । प्रथमं बहूनर्थान्निर्दिश्य तेषां क्रममनुसृत्य यः पश्चादर्थान्तराणां निर्देशः स यथासङ्ख्यनामाऽलङ्कारः । किमसधर्मणामिति । उच्यते । बहूनामर्थानामुपदेशे पश्चात्तावतामर्थानां सर्वत्र निर्देशो न भवति । न हि

गोक्षीरकुन्दहलिनां विशुद्धिर्यशसा जिता ।

इत्युच्यमाने तावतामनुनिर्देशोऽस्ति । न चैवमुक्तिरनुपपन्ना । किं तावत् कारणमत्र तावतामनुनिर्देशो नास्ति । एकधर्मयोगस्यैव विवक्षितत्वात् । त्रयोऽपि हि गोक्षीरकुन्दहलिनः एकस्य यशस उपमानभूताः । तत्र विशुद्धिः साधारणधर्मः । अयमेक एव हि त्रयाणामप्युपमानतानिर्वाही धर्मः । एवं यद्यप्युपमानव्यक्तयोऽनेकाः तथाप्येकसाधारणधर्मयोगात् सधर्माणो भवन्त्यस्ता एकस्यैवानुनिर्दिष्टस्योपमेयस्यान्वयेन शान्ताकाङ्क्षा भवन्ति । यत्र पुनर्भिन्नभिन्नधर्मेणोपमानभावो बहूनामिष्यते तत्रासधर्मणां तावतामुपमानानामन्वयाय तावतामुपमेयानामनुनिर्देशोऽपेक्ष्यत एवेति । यत्पुनरत्र प्रतिहारेन्दुराजोऽन्यथा व्याचष्टे स तस्य वृथा क्लेशः । न च सहृदयप्रीतय इत्यलम् ॥ ८९ ॥

यथा—

पद्मेन्दुभृङ्गमातङ्गपुंस्कोकिलकलापिनः ।
वक्त्रकान्तीक्षणगतिवाणीवालैस्त्वया जिताः ॥ ९० ॥

त्वया नायिकया । इन्दुकान्तिनायिकादेहकान्त्योरुपमानोपमेयभावः । एव-मुत्तरत्र । वालः केशपाशः ॥ ९० ॥

अथोत्प्रेक्षा—

अविवक्षितसामान्या किञ्चिच्चोपमया सह ।
अतद्गुणक्रियायोगादुत्प्रेक्षाऽतिशयान्विता ॥ ९१ ॥

सामान्यं सादृश्यम् । यत्र इवशब्दवाच्यं सादृश्यं किञ्चिदपि न विवक्ष्यते अथाप्युपमा इवशब्दः प्रयुज्यते सम्भावनापरतया । इवशब्देन च सह अत-द्गुणक्रियायोगो निबध्यते न सः असः तस्य गुणक्रिये अतद्गुणक्रिये तत्स योगः, तत्रैतन्निबन्धननिमित्तातिशयवत्युत्प्रेक्षा भवति ॥ ९१ ॥

यथा—

किंशुकव्यपदेशेन तरुमारुह्य सर्वतः ।
दग्धादग्धमरण्यान्याः पश्यतीव विभावसुः ॥ ९२ ॥

अत्राग्नेः पादपारोहणपूर्वकदग्धादग्धदर्शनरूपातत्क्रियायोगो निबद्धः । इव-शब्दश्चाविवक्षितसादृश्यः ॥ ९२ ॥

[अथायमन्योऽलङ्कारः स्वभावोक्तिरिति—

स्वभावोक्तिरलङ्कार इति केचित् प्रचक्षते ।

कस्तत्र स्वभावो नाम । उच्यते—

अर्थस्य तदवस्थत्वं स्वभावोऽभिहितो यथा ॥ ९३ ॥

याऽनन्यसामान्याऽनुभवगोचरा चमत्काराय भवति साऽवस्था यस्य तत् तदवस्थम् । तस्य भावस्तदवस्थत्वम् ।

ननु वक्रोक्त्यनभिधानतो हेत्वादेरनलङ्कारतोक्ता । स दोष इहापि प्राप्नोति । नेत्युच्यते । स्वभावोक्तिर्वक्रोक्तिरिति हि द्वैराश्ये स्थिते वक्रो-

क्त्यनभिधानं वक्रोक्तिविशेषरूपालङ्कारतामेव निवर्तयति । नालङ्कारतासामान्यम् । चतुष्पात्त्वं हि व्यावर्तमानं गोत्वमाहिषत्वादि निवर्तयति न चेतनत्वम् । अचतुष्पदां मनुष्याणामपि चेतनत्वात् । द्विपात्त्वचतुष्पात्त्वगूढपात्त्वानां त्वभावश्चेतनत्वं निवर्तयितुमलम् । तथा हेत्वादीनां वक्रोक्तित्वाभाव उपमादिवद्वक्रोक्तिविशेषरूपालङ्कारत्वाभावमेव साधयति नालङ्कारतासामान्यम् । हेत्वादिनामनिर्देशादेव तु स्वभावोक्तिभेदस्य तत्र सिद्ध्या राशिद्वयबाहिर्भावप्रतीतेरलङ्कारतासामान्यव्यावृत्तिरवगम्यते । तस्माद्वक्रोक्तित्वाभावात् स्वभावोक्तिरनलङ्कार इति शिंशुपात्वाभावादाम्रो न वृक्ष इतिवदुपहास्यम् । 'इति केचित् प्रचक्षते' इति न स्ववैमत्यं प्रदर्शयितुम् । 'आशीरपि च केषांचित्' इति वक्ष्यमाणवत् । अपि तु नानावक्तृकतां ज्ञापयितुम् । 'बहुविधकृतीर्दृष्ट्वाऽन्येषां' इति हि वक्ष्यति ।

तथा च "सैव सर्वा वक्रोक्तिः अलङ्कारप्रकारः सर्वः । 'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः' इति वचनात् । शब्दस्य हि वक्रता ऽभिधेयस्य च लोकोत्तररूपेणावस्थानमित्ययमेवालङ्कारस्यालङ्कारभावः' इति ग्रन्थकारवचनं व्याचक्षाण एव लोचनकारोऽन्यत्राह

काव्येऽपि च लोकनाट्यधर्मिस्थानीये स्वभावोक्तिवक्रोक्तिप्रकारद्वयेनालौकिकप्रसन्नमधुरौजस्विशब्दसमर्प्यमाणविभावादियोगादियमेव रसवार्ता इति । एवमातिशयोक्तित्वाभावेन सामान्यमीलितादीनामलङ्कारतामनङ्गीकुर्वन् हेमचन्द्रोऽपि स्वभावोक्तेरलङ्कारतां स्थापयतीति प्रादर्शयाम ॥ ९३ ॥

यथा—

आक्रोशन्नाह्वयन्नन्यानाधावन्मण्डलै रुदन् ।
गा वारयति दण्डेन बालः सस्यावतारिणीः ॥ ९४ ॥

इदमुदाहरणं ददतो ग्रन्थकारस्यायमलङ्कारोऽनभिमत इति वदन्तः प्रतिज्ञामात्रप्रगल्भाः ॥ ९४ ॥

उक्तेष्वलङ्कारेष्ववान्तरप्रभेदप्रपञ्चनिरूपणमपेक्षमाणं प्रत्याह—

**समासेनोदितमिदं धीखेदायैव विस्तरः ।**
**असंगृहीतमप्यन्यदभ्यूह्यमनया दिशा ॥ ९५ ॥**

उक्तमुपसंहरन् वक्ष्यमाणं प्रतिजानीते—

**स्वयं कृतैरेव निदर्शनैरियं**
**मया प्रक्लृप्ता खलु वागलङ्कृतिः ।**
**अतः परं चारुरनेकधाऽपरो**
**गिरामलङ्कारविधिर्विधास्यते ॥ ९६ ॥**

इति काव्यालङ्कारे द्वितीयः परिच्छेदः ।

---

निदर्शनानां स्वीयत्वान्यत्वाभ्यामेव परिच्छेदभेद इत्यभिप्रायः । गिरामलङ्कारभेदो वक्ष्यत इति ॥ ९६ ॥

नियोगतः कस्य स वाति वातस्तपत्यसौ तामरसैकबन्धुः ।
प्रवर्षति प्राज्यमयं पयोदः प्रभूतसस्या पृथिवी विभाति ॥

इत्युद्यानवृत्तौ द्वितीयः परिच्छेदः ।



॥ श्रीः ॥

# अथ तृतीयः परिच्छेदः ॥

उपसन्नः प्रयात्यारादुदासीनमुपैति माम् ।
न शृणोत्युक्तमागत्य स्मयमानः प्रभाषते ॥

अत्र प्रथमं त्रयोविंशतिरलङ्काराः । तेषामुद्देशः—

प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम् ।
द्विप्रकारमुदात्तञ्च भेदैः श्लिष्टमपि त्रिभिः ॥ १ ॥
अपह्नुतिं विशेषोक्तिं विरोधं तुल्ययोगिताम् ।
अप्रस्तुतप्रशंसाञ्च व्याजस्तुतिनिदर्शने ॥ २ ॥
उपमारूपकं चान्यदुपमेयोपमामपि ।
सहोक्तिपरिवृत्ती च ससन्देहमनन्वयम् ॥ ३ ॥
उत्प्रेक्षावयवं चान्ये संसृष्टिमपि चापरे ।
भाविकत्वं च निजगुरलङ्कारं सुमेधसः ॥ ४ ॥

तत्र प्रेयः प्रियतराख्यानम् । इदमुदाहर्तुमाह—

प्रेयो गृहागतं कृष्णमवादीद्विदुरो यथा ।

येन प्रकारेणाह स प्रकारः प्रेयोऽलङ्कारः । तादृशप्रीतिविशेषविशिष्टतेति यावत् । किमवादीत् । उच्यते—

अद्य या मम गोविन्द जाता त्वयि गृहागते ।
कालेनैषा भवेत् प्रीतिस्तवैवागमनात् पुनः ॥ ५ ॥

अन्यत एवंविधा प्रीतिर्नैव भविष्यति । यन्मामागमनेनानुगृह्णाति तन्मे लोके सर्वेभ्यः प्रीतिहेतुभ्यः प्रियतरम् ॥ ५ ॥

अथ रसवत्—

रसवद्दर्शितस्पष्टशृङ्गारादिरसं यथा ।
देवी समागमद्धर्ममस्करिण्यतिरोहिता ॥ ६ ॥

'छद्मस्करिण्यतिरोहिते' इति त्वत्र पाठेन भाव्यम् ।

स्वरूपमास्थाय च तां कृतस्मितः
समाललम्बे वृषराजकेतनः ।

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुध्दृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ॥

इति महाकवे रसस्यन्दिनी सूक्तिरत्र ग्रन्थकारस्य हृदये स्थिता। कपटलिङ्गी हि सन् पूर्वं भगवानभाषत। देव्या अपगमोद्यमं दृष्ट्वा तस्मिन् कपटलिङ्गितामपहाय स्वस्वरूपेण साक्षादाविर्भूते देव्यास्तेन समागमोऽतिमात्ररसभरित इति। अतिरोहिते स्वस्वरूपेणाविर्भूते॥ ६॥

ऊर्जस्वि रूढाहङ्कारम्। तदुच्यते—

**ऊर्जस्वि कर्णेन यथा पार्थाय पुनरागतः।**
**द्विः सन्दधाति किं कर्णः शल्येत्यहिरपाकृतः॥ ७॥**

क्रोधाग्निसन्दीप्तनेत्रः कर्णः पार्थं जिघांसन् शरं सन्दधे। खाण्डवदाहे पार्थेन निहतजननीकस्तत्प्रतियातनावसरप्रतीक्षी कश्चित् सर्पस्तं शरमनुप्रविवेश। कर्णप्रेरितः स शरो भगवता कृष्णेन परित्रातमर्जुनं हन्तुं न शशाक। तेन जातदुःखः सर्पः पुनः कर्णमभ्युपजगाम—यदि पुनरपि शरः सन्धीयेत नियतं पार्थं हनिष्यामीति। शल्योऽपि पुनः शरसन्धानाय कर्णमचोदयत्। तदा शल्यं सम्बोध्य कर्ण उवाच न हि शल्य कर्णो द्विः सन्दधातीति। एवमुक्त्वा च तं सर्पमपाचकीरति क्वचिद्भारते प्रतिपाद्यत इति प्रतीमः। यथाकथमपि अर्जुने हन्तव्ये तत्र सहाये च स्वयमुपस्थिते यदेवं कर्णः स्वशीलान्न व्यचलत् तत्र हृदयौन्नत्यरूपस्याहङ्कारस्य रूढता व्यक्ता॥ ७॥

अथ पर्यायोक्तम्—

**पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते।**
**उवाच रत्नाहरणे चैद्यं शार्ङ्गधनुर्यथा॥ ८॥**

वक्तव्यं साक्षादनुक्त्वा यद्भङ्ग्यन्तरेणाभिधानं तत् पर्यायोक्तम्। तस्योदाहरणं रत्नाहरणनाम्नि काव्यविशेषे॥ ८॥

अथ पर्यायोक्तम्—

पर्यायोक्तं यदन्येन प्रकारेणाभिधीयते ।
उवाच रत्नाहरणे चैद्यं शार्ङ्गधनुर्यथा ॥ ८ ॥

वक्तव्यं साक्षादनुक्त्वा यद्भङ्ग्यन्तरेणाभिधानं तत् पर्यायोक्तम् । तस्योदाहरणं रत्नाहरणनाम्नि काव्यविशेषे ॥ ८ ॥

गृहेष्वध्वसु वा नान्नं भुञ्ज्महे यदधीतिनः ।
न भुञ्जते द्विजास्तच्च रसदाननिवृत्तये ॥ ९ ॥

इदमन्नं भोक्तव्यमिति चैद्येन प्रार्थितो भगवान् चैद्यमाह— यदन्नं श्रोत्रिया न भुञ्जते तद्वयं न भुञ्ज्महे । अध्वस्वपि नास्य व्रतस्य भङ्गोऽस्माभिः कदाचित् क्रियत इति । तदिदं रसदाननिवृत्तये । रसो विषम् । द्विषन् हि चैद्योऽन्ने विषं सम्मिश्रयेत् । तस्य श्रोत्रियभोक्तव्यतानिर्बन्धे तु महतः पातकाद्बिभ्यत् स न कदाचित्तथा कर्तुं प्रवर्तेतेति ॥ ९ ॥

अथ समाहितम्—

समाहितं राजमित्रे यथा क्षत्रिययोषिताम् ।
रामप्रसत्त्यै यान्तीनां पुरोऽदृश्यत नारदः ॥ १० ॥

अस्य लक्षणमाह दण्डी—

किञ्चिदारभमाणस्य कार्यं दैववशात् पुनः ।
तत्साधनसमापत्तिर्या तदाहुः समाहितम् ॥

इति । इह तूदाहरणेनैव निरूपणं राजमित्र यथेति । राजमित्रे काव्ये । त्रिस्सप्तकृत्वो जगतीपतीनां हन्तारं जामदग्न्यं रामं प्रसादयितुमिच्छन्त्यः क्षत्रियस्त्रियः कथमेष प्रसादनीय इति चिन्तयन्त्य एव तमुपजग्मुः । आसां तु चिन्तां हरन् नारदो महर्षिः पुरतः प्रादुर्बभूव । तेनासां कार्यसिद्धिः सुलभाऽभवदिति ॥ १० ॥

अथोदात्तम्—

उदात्तं शक्तिमान् रामो गुरुवाक्यानुरोधकः ।
विहायोपनतं राज्यं यथा वनमुपागमत् ॥ ११ ॥

अनुबन्धः ।

को नाम लोके सर्वशक्तः सन् उपनतं राज्यं विजह्यात् । वनं चोपगच्छेत् । अथापि दाशरथिस्तथा चक्रे । कस्मात् । आज्ञा गुरूणामविलङ्घनीयेति । एवमाशयस्यातिमहत्त्वं तदुदात्तमुच्यते । विहायोपवनमि ते पाठश्चिन्त्यः ॥ ११ ॥

यद् विभूतेर्महत्त्वं तदुदात्तमिति तु केचित् । तदाह—

**एतदेवापरेऽन्येन व्याख्यानेनान्यथा विदुः ।**
**नानारत्नादियुक्तं यत् तत् किलोदात्तमुच्यते ॥ १२ ॥**

एतदेवोदात्तं अपरे अन्यादृशं मन्यन्ते । कथम् । अन्यथा व्याख्यानात् । उदात्तत्वं ह्याशयस्य महत्त्वमिति कृत्वा 'उदात्तं शक्तिमान् रामः' इत्याद्यस्माभिरुक्तम् । अन्ये तु विभूतिमहत्त्वं तदिति व्याचक्षते । किलेत्यनास्थायाम् । वक्ष्यति च सोपहासमुपरिष्टात्-

तदेभिरङ्गैर्भूष्यन्ते भूषणोपवनस्रजः ।
वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते ॥

इति । इदममृष्यमाण आह दण्डी—

पूर्वत्राशयमाहात्म्यमत्राभ्युदयगौरवम् ।
सुव्यञ्जितमिति प्रोक्तमुदात्तद्वयमप्यदः ॥

अयमभिप्रायः । को हेतुरत्रालङ्कारो नास्ति । शशिकान्तोपलच्छन्नत्वं क्रीडागृहस्यालङ्कारो न वाच इति चेत् गुरुवाक्यानुरोधित्वमपि रामस्यालङ्कारो न वाच इति समानम् । नायकगुणः काव्यगुणायेति चेदिदमपि समानम् । चन्द्रकान्तमयक्रीडागृहवत्ताऽपि हि नायकस्य गुण एव । वक्रोक्तिरत्र नास्तीति चेत् पूर्वत्र कथम् । आशयमहत्त्वव्यञ्जनादिति चेदत्रापि विभूतिमहत्त्वव्यञ्जनादिति तुल्यमिति ॥ १२ ॥

अपरेषामुदात्तस्योदाहरणम्—

**चाणक्यो नक्तमुपयान्नन्दक्रीडागृहं यथा ।**
**शशिकान्तोपलच्छन्नं विवेद पयसां कणैः ॥ १३ ॥**

पयसां गणैरिति तु क्वचित् पठ्यते ॥ १३ ॥

इति द्विप्रकारमुदात्तम् । अथ श्लिष्टम्—

उद्यानपतिका-

**उपमानेन यत्तत्त्वमुपमेयस्य साध्यते ।**
**गुणक्रियाभ्यां नाम्ना च श्लिष्टं तदभिधीयते ॥ १४ ॥**

गुणेन क्रियया नाम्ना च यथासम्भवं यत्तोपमेयस्योपमानाभेदो निबध्यते तत्र श्लिष्टं नामालङ्कारः । उपमेयसम्बन्धिनां गुणक्रियानाम्नामुपमानसम्बन्धिभिर्गुणक्रियानामभिरभेदसम्पादनमिति विवक्षितम् ॥ १४ ॥

नन्वेवमुपमानोपमेयगुणाद्यभेदनिबन्धनं रूपकेऽप्यस्ति । उच्यते—

**लक्षणं रूपकेऽपीदं लक्ष्यते काममत्र तु ।**
**इष्टः प्रयोगो युगपदुपमानोपमेययोः ॥ १५ ॥**

काममिदं लक्षणं रूपकेऽप्यस्ति । तथाऽपि त्वयं विशेषो द्रष्टव्यः । अत्र श्लिष्टे उपमानोपमेययोः उपमानोपमेयसम्बन्धी प्रयोगः युगपत् तन्त्रेणेष्टः । उपमानगुणाक्रिययोः उपमेयगुणाक्रिययोश्च सकृत्प्रयुक्तेन पदेन प्रतिपादनमिति यावत् ॥ १५ ॥

न चैवं रूपकेऽस्ति । तथा हि—

**शीकराम्भोमदसृजस्तुङ्गा जलददन्तिनः ।**
**इत्यत्र मेघकरिणां निर्देशः क्रियते समम् ॥ १६ ॥**

रूपकोदाहरणं तावत् पूर्वमुक्तं—शीकराम्भोमदसृज इति । अत्रोपमेयानां जलदानां उपमानानां दन्तिनाञ्च निर्देशः गुणनिर्देशः समं तुल्यं क्रियते । जलदानां दन्तिनां च यथा पृथगुपादानं तथा तत्सम्बन्धिनः शीकरांभसो मदस्य च पृथगुपादानं क्रियत इत्युक्तं भवति ॥ १६ ॥

तथा च–

**श्लेषादेवार्थवचसोरस्य च क्रियते भिदा ।**

गुणक्रियारूपस्यार्थस्य तद्वाचकस्य शब्दस्य च युगपदुपादानादेव रूपकस्य अस्य श्लिष्टस्य च भेदो भवति । अन्यथाऽपि प्रतिभासमानमस्य प्रकरणस्य व्याख्यानमनतिसारत्वादुपेक्ष्यते ।

अयं श्लिष्टालङ्कारो विभज्योदाहियते । 'भेदैः श्लिष्टमपि त्रिभिः' इति ह्युक्तम् । —

अनुबन्धः ।

तत् सहोक्त्युपमाहेतुनिर्देशात् त्रिविधं यथा ॥ १७ ॥

सहोक्तिः समुच्चयः। अयं समाहारद्वन्द्वः। सहोक्त्युपमाहेतूनां निर्देशादिति वा। समुच्चायकचकारवत् उपमावाचकेवशब्दवत् हेतुवाचकपञ्चमीयुक्तभेदि त्रिविधं श्लिष्टमिति फलितम्। अत्र क्रमेणोदाहरणमुच्यते॥ १७ ॥

तत्राद्यं यथा—

छायावन्तो गतव्यालाः स्वारोहाः फलदायिनः ।
मार्गद्रुमा महान्तश्च परेषामेव भूतये ॥ १८ ॥

छाया श्रान्तसमाश्रयणयोग्योऽनातप एकत्र; अपरत्र गृहारामादि । व्याल: सर्पो दुर्जनश्च । स्वारोहाः सुखेनारोढुं शक्याः सूपगमाश्च । फलमेकत्र प्रसिद्धम् अपरत्राभीप्सितोऽर्थः । भूतये कुशलाय । अत्रोपमानभूता मार्गद्रुमा अपि छायावन्तः उपमेयभूता महान्तोऽपि छायावन्त इति छाया-वत्त्वेनोभयोरभेदबोधनाल्लक्षणसङ्गतिर्ज्ञेया ॥ १८ ॥

उपमायुक्तं श्लिष्टं यथा—

उन्नता लोकदयिता महान्तः प्राज्यवर्षिणः ।
शमयन्ति क्षितेस्तापं सुराजानो घना इव ॥ १९ ॥

अत्रौन्नत्यादिभिर्गुणैरिव क्षितितापशमनरूपया क्रिययाऽप्यभेदबोधनमिति विशेषः। शब्दश्लेषस्तु सर्वत्रैव । अनेकार्थतात्पर्येऽपि सकृदेव शब्दप्रयोगात् अर्थस्य तर्हि कथं श्लेषः । उभयोरर्थयोर्विवक्षाप्रतीतेः । उच्यते। एके-शब्देनोभयोरुपादानात् तयोरभेदारोपप्रतीतेः श्लिष्टता। आह च वामनः

'स धर्मेषु तन्त्रप्रयोगे श्लेषः'

इति । 'स अभेदारोपः । धर्मेषु गुणक्रियाशब्दरूपेषु । तन्त्रप्रयोगे तन्त्रेणोच्चारणे सति' । व्याख्याता च 'यद्यपि समुच्चयोऽत्र स्फुरति तथाऽपि साधारणविशेषणमहिम्ना आरोपः प्रतिपाद्यत इति श्लेषः' इति ॥ १९ ॥

अथ हेतुनिर्देशयुक्तं श्लिष्टं यथा—

रत्नवत्त्वादगाधत्वात् स्वमर्यादाऽविलङ्घनात् ।

उद्यानपतिभि

**बहुसत्त्वाश्रयत्वाच्च सदृशस्त्वमुदन्वता ॥ २० ॥**

रत्नवत्त्वं तदाकरत्वं तत्स्वामित्वं च । अगाधत्वं गाधभिन्नत्वं हृदयगाम्भीर्यं च । मर्यादा वेला लोकशास्त्रनियमश्च । एकत्र सत्त्वाः यादांसि अपरत्र सत्त्वं बलम् । अत्र मर्यादाऽविलङ्घनं क्रिया । अन्ये गुणाः । पञ्चम्यन्तत्वाद्धेतुनिर्देशवदिदं श्लिष्टम् ॥ २० ॥

अथापह्नुतिः—

**अपह्नुतिरभीष्टा च किंचिदन्तर्गतोपमा ।**
**भूतार्थापह्नवादस्याः क्रियते चाभिधा यथा ॥ २१ ॥**

अपह्नुतिः प्रतिषेधात्मा प्रसिद्धा । तत्र सर्वत्रालङ्कारभावो नेष्यते । किंतु यत्रोपमा गम्यते स प्रतिषेध इहापह्नुतिः । तदाह किञ्चिदिति । किंचिदन्तर्गतिः विना वचनं प्रतीयमानता ।

न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।

इति नापह्नुतिरलङ्कारः । असत एव ह्यत्र पद्मत्वादेः प्रतिषेधः । तदाह भूतार्थापह्नवादस्या अपह्नुतिरिति नाम क्रियत इति ॥ २१ ॥

यथा—

**नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः ।**
**अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः ॥ २२ ॥**

'अत्र मदमुखरमधुकरावलीविरुतं विरहिणां हृदयभेदित्वाविशेषेण कामकार्मुककेङ्कृतेन समानमध्यवसाय तदैक्यारोपेण' भूतार्थ एव मधुकरावलीत्वरूपोऽपह्नूयते ॥ २२ ॥

अथ विशेषोक्तिः—

**एकदेशस्य विगमे या गुणान्तरसंस्तुतिः ।**
**विशेषप्रथनायासौ विशेषोक्तिर्मता यथा ॥ २३ ॥**

विवक्षितकार्यसाधनौपयिका ये गुणास्तत्रैकदेशस्य विरहमुपनिबध्य यत्र गुणान्तरं कार्यसिद्धिक्षमतया प्रतिपाद्यते महिमातिशयप्रथनाय सा विशेषोक्तिः । सम्पूर्णा हि सामग्री कार्यं जनयति । तत्र विकलाऽपि जनयतीति वचनं अनुबन्धः ।

विशेषोक्तिर्भवति । गुणान्तरसंस्थितिरिति च पठन्ति ॥ २३ ॥

यथा—

**स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।**
**हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥ २४ ॥**

अतनुरपि त्रीणि जगन्ति जयतीति बलविशेषस्यात्र प्रथनम् ॥ २४ ॥

अथ विरोधः—

**गुणस्य वा क्रियाया वा विरुद्धान्यक्रियाऽभिधा ।**
**या विशेषाभिधानाय विरोधं तं विदुर्बुधाः ॥ २५ ॥**

विरुद्धानां पदार्थानामेकत्र प्रतिपादनं विरोध इत्युक्तं भवति । ननु कः कविरेवमनुपपन्नं ब्रूयात् । न । न खलु कविरेवांविधेऽर्थे तत्परः । विशेषं त्वभिधित्सन्नेवमाहेति स्थितं तावदेतत् । तन्न विस्मर्तव्यम् ॥ २५ ॥

यथा—

**उपान्तरूढोपवनच्छायाशीताऽपि भूरसौ ।**
**विदूरदेशानपि वः सन्तापयति विद्विषः ॥ २६ ॥**

व इति पूजायां बहुत्वम् । शीतायाः सन्तापकारिणीत्वं विरुद्धम् । तथा दूरस्थितसन्तापहेतुत्वम् । विरुद्धमपि त्वेवमुच्यते । यथा स्मरणमात्रेण सर्वे विद्विषः सन्तप्यन्ते तथा त्वमतिबलपराक्रमशाली अस्या भुवो भर्तेति राजानं स्तोतुम् । 'धूरसौ' इति तु पठ्यमानं न वयं बुध्यामहे । 'पूरसौ' इति च युक्ततरमुत्पश्यामः ॥ २६ ॥

अथ तुल्ययोगिता—

**न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया ।**
**तुल्यकार्यक्रियायोगादित्युक्ता तुल्ययोगिता ॥ २७ ॥**

गुणैर्न्यूनस्यापि कस्यचित् उत्कृष्टेनान्येन साम्यप्रतिपिपादयिषया एककार्यकारित्वेऽभिधीयमाने तुल्ययोगिता उक्ता । तन्निमित्तस्तुल्ययोगिताऽलङ्कार इति । सा च वक्ष्यमाणरूपा । ननु दीपकेऽप्येकक्रियायोगः । सत्यम् । किं तु तत्र वाक्यभेदो नियतः । अत्र तु तदभेदः ॥ २७ ॥

उद्यानपालिका-

**शेषो हिमगिरिस्त्वं च महान्तो गुरवः स्थिराः ।**
**यदलङ्घितमर्यादाश्चलन्तीं बिभृथ क्षितिम् ॥ २८ ॥**

महत्वगुरुत्वस्थिरत्वैः शेषहिमगिरिभ्यां राज्ञः साम्यं विवक्षता मर्यादानतिलङ्घनं, एकत्र गुरुद्रव्यत्वात् अपरत्र दौर्जन्यशीलत्वाच्च स्वभावतश्चलन्त्याः क्षितेर्भरणमित्येककार्यक्रियायोगो निबद्धः । अत इयं तुल्ययोगिता ॥ २८ ॥

अथाप्रस्तुतप्रशंसा —

**अधिकारादपेतस्य वस्तुनोऽन्यस्य या स्तुतिः ।**
**अप्रस्तुतप्रशंसेति सा चैवं कथ्यते यथा ॥ २९ ॥**

प्रकरणादपेतस्य अप्राकरणिकस्य सादृश्येन प्रस्तुतमाक्षिपतोऽन्यस्य वस्तुनो या प्रशंसा सा वक्ष्यमाणविधा अप्रस्तुतप्रशंसेति कथ्यते ॥ २९ ॥

यथा—

**प्रीणितप्रणयि स्वादु काले परिणतं बहु ।**
**विना पुरुषकारेण फलं पश्यत शाखिनाम् ॥ ३० ॥**

प्रणयिनः मूलमाश्रयन्तः पान्थाः शाखामाश्रयन्तः पक्षिणश्च । इयमप्रस्तुतानां वृक्षाणां प्रशंसाऽयत्नसम्पन्नप्रभूतवित्तमुदारं गमयति । स ह्यर्थितदानेनाभ्यागतान् प्रीणयति । काले ददाति । बहु च ॥ ३० ॥

अथ व्याजस्तुतिः—

**दूराधिकगुणस्तोत्रव्यपदेशेन तुल्यताम् ।**
**किञ्चिद्विधित्सोर्या निन्दा व्याजस्तुतिरसौ यथा ॥ ३१ ॥**

दूरं अत्यन्तं अधिका गुणा यस्य स दूराधिकगुणः तस्य स्तोत्रं गुणकीर्तनं कृत्वा तदपेक्षयाऽपकृष्टत्वेन यदि प्रकृतस्य निन्दां करोति; किमिच्छन्; केनचिदंशेन तत्तुल्यतां प्रकृतस्य विधातुं प्रतिपादयितुमिच्छन्; सा व्याजस्तुतिः । 'कचिद्विधित्सोः' इति युक्तं पठितुम् ॥ ३१ ॥

यथा—

**रामः सप्ताभिनत्सालान् गिरिं क्रौञ्चं भृगूत्तमः ।**
**शतांशेनापि भवता किं तयोः सदृशं कृतम् ॥ ३२ ॥**

सुग्रीवप्रत्ययाय भगवान् दाशरथिः सप्त सालान् बिभेद । तथा स्वीयमस्त्र-

अनुबन्धः ।

विद्याकौशलं प्रकाशयन् भगवान् जामदग्न्यः क्रौञ्चं गिरिं बिभेद । किमल्पमपि त्वया तयोः सदृशं कृतं येन त्वं ताभ्यामुपमीयेथा इति प्रतिषेध्यतया तत्तुल्यतामाक्षिपन्तीयं निन्दा स्वात्मनि वक्तृतात्पर्यविरहात् तत्रैव पर्यवस्यति ॥ ३२ ॥

अथ निदर्शना—

**क्रिययैव विशिष्टस्य तदर्थस्योपदर्शनात् ।**
**ज्ञेया निदर्शना नाम यथेववतिभिर्विना ॥ ३३ ॥**

यत्र स्वक्रिययैव कश्चित् उपमानोपमेयभावोज्ज्वलं किञ्चिदर्थान्तरं बोधयतीति निबध्यते तत्र निदर्शना नामालङ्कृतिर्ज्ञेया । कथं तु अन्यस्यार्थस्यान्यबोधकत्वं निबध्येत । असम्बन्धात् । सादृश्याद्बोधकत्वमित्यदोषः । तत्तु सादृश्यमिह गम्यम् । न वाच्यमुपमायामिव । तदाह यथेववतिभिर्विनेति ३३॥

यथा—

**अयं मन्दद्युतिर्भास्वानस्तं प्रति यियासति ।**
**उदयः पतनायेति श्रीमतो बोधयन्नरान् ॥ ३४ ॥**

व्यपवृत्तभाग्यः श्रीमान् यथा पतति तथा भास्वानस्तमेतीति गम्यते ॥ ३४ ॥

अथोपमारूपकम्—

**उपमानेन तद्भावमुपमेयस्य साधयन् ।**
**यां वदत्युपमामेतदुपमारूपकं यथा ॥ ३५ ॥**

तद्भावोऽभेद इत्युक्तम् । ननु रूपकस्यापीदमेव लक्षणमुक्तम्—उपमानेन यत् तत्त्वमुपमेयस्य रूप्यते—इति । सत्यम् । किन्तु गुणसाम्यमपि रूपके विवक्षितम् । 'गुणानां समतां दृष्ट्वा' इति ह्युक्तम् । अपि च रूपकेऽभेदप्रधानता। इह तु प्रतीतितोऽभेदेऽप्युपमैव तात्पर्यगोचरीभूता । तथा चाह 'यां वदत्युपमां' इति । अपि च रूपके जलददन्तिन इत्युपमेयाभेद उपमाने शाब्दः । सोऽप्युभयोरेकपदोपादानात् सिद्धवत् प्रतीयते । अर्थात्तु उपमानाभेद उपमेये । इह तूपमेये उपमानाभेदः साक्षात् प्रतीतः । स च पृथक्पदोपात्ततया विधेयः । अत एवाह साधयन्निति । अतिनिर्बन्धे त्वत्र

उद्यानपत्रिका-

दुर्धत्व एव विशेषः । अतो दण्डिवामनावन्यथेममलङ्कारमाहतुः ॥ ३५ ॥

यथा—

समग्रगगनायाममानदण्डो रथाङ्गिनः ।
पादो जयति सिद्धस्त्रीमुखेन्दुनवदर्पणः ॥ ३६ ॥

मुखमिन्दुरिव मुखेन्दुः तस्यामूतपूर्वो दर्पण इवेति ॥ ३६ ॥

अथोपमेयोपमा—

उपमानोपमेयत्वं यत्र पर्यायतो भवेत् ।
उपमेयोपमां नाम ब्रुवते तां यथोदितम् ॥ ३७ ॥

प्रथमं कस्यचिदुपमानत्वं अन्यस्योपमेयत्वं चोक्त्वा पुनर्यत्रोपमानस्योपमेयत्वं उपमेयस्योपमानत्वं चाच्यते तत्र पर्यायत उपमानोपमेयत्वं भवति । सोऽयमुपमेयोपमा नामालङ्कारः । उपमेयेनोपमीयमानत्वादुपमानस्य । यथा वक्ष्यमाणमुदितमिति सामान्ये नपुंसकम् । 'यथोदिता' इति वा पठितव्यम् । यथोदितामिति त्वनन्वितम् ॥ ३७ ॥

सुगन्धि नयनानन्दि मदिरामदपाटलम् ।
अम्भोजमिव वक्त्रं ते त्वदास्यमिव पङ्कजम् ॥ ३८ ॥

सुगन्धि शोभनेन गन्धेनावियुक्तम् । मदिरामदेन पाटलं अरुणम् । अम्भोजमपि सुगन्धि नयनानन्दि मदिरामदवत् पाटलं च । केवलः पाटलिमा वा तात्पर्यगत्या विवक्षितः ॥ ३८ ॥

अथ सहोक्तिः—

तुल्यकाले क्रिये यत्र वस्तुद्वयसमाश्रये ।
पदेनैकेन कथ्येते सहोक्तिः सा मता यथा ॥ ३९ ॥

यत्रानेकवस्त्वाश्रया क्रिया गुणो वा सहादिपदोपादानेन तुल्यकालतया सकृत्प्रयुक्तेन पदेन प्रतिपाद्यते तत्र सहोक्तिरलङ्कारः ॥ ३९ ॥

यथा—

हिमपाताविलदिशो गाढालिङ्गनहेतवः ।
वृद्धिमायान्ति यामिन्यः कामिनां प्रीतिभिः सह ॥ ४० ॥

अनुबन्धः ।

हिमपातशैत्यात् गाढालिङ्गनहेतुता । तथाभूता रात्रयो वर्धन्त इति कामिनां प्रीतिवृद्धिः ॥ ४० ॥

अथ परिवृत्तिः—

**विशिष्टस्य यदादानमन्यापोहेन वस्तुनः ।**
**अर्थान्तरन्यासवती परिवृत्तिरसौ यथा ॥ ४१ ॥**

यत्राविशिष्टवस्तुपरित्यागेन विशिष्टवस्त्वादानमुपनिबध्यते अर्थान्तरन्यासश्च तत्र परिवृत्तिरलङ्कारः ॥ ४१ ॥

**प्रदाय वित्तमर्थिभ्यः स यशोधनमादित ।**
**सतां विश्वजनीनानामिदमस्खलितं व्रतम् ॥ ४२ ॥**

गत्वरत्वादल्पं वित्तम् । स्थिरत्वात्तु यशोधनं विशिष्टमिति को न वेद । सर्वजनहिता विश्वजनीनाः ॥ ४२ ॥

अथ ससन्देहः—

**उपमानेन तत्त्वं च भेदं च वदतः पुनः ।**
**ससन्देहं वचः स्तुत्यै ससन्देहं विदुर्यथा ॥ ४३ ॥**

तत्त्वमभेद इत्युक्तम् । ननु किमिति कश्चित् भेदमभेदं च वदन् सन्दिग्धं भाषते । उच्यते । स्तुतिं कर्तुं तथा भाषत इति ॥ ४३ ॥

यथा—

**किमयं शशी न स दिवा विराजते**
**कुसुमायुधो न धनुरस्य कौसुमम् ।**
**इति विस्मयाद्विमृशतोऽपि मे मति-**
**स्त्वयि वीक्षिते न लभतेऽर्थनिश्चयम् ॥ ४४ ॥**

सातिशयकान्तिमत्तया सौम्यतया च विस्मितो विनष्टविवेचनपाटवः शङ्कते किमयं शशीति । पुनःप्रत्यावृत्तविवेको भेदमनुसन्धत्ते न स इति । अथ सौन्दर्यभूम्ना विस्मितस्तर्कयति किमयं कुसुमायुध इति । पुनस्तद्भेदं प्रतिपद्यते नेति । नह्यस्य कौसुमं धनुरस्ति । तेन नायं मन्मथः ॥

अयि सौम्य भुवनसुन्दर त्वयि दृष्टे विस्मितस्य मे मतिः उपपत्त्यनुपपत्त्यन्वे-

उद्यानपत्रिका-

षणायां क्रियमाणायामपि अयं शश्येवेति वा नैवेति वा मन्मथ एवेति वा नैवेति वा स्वविषयावधारणां न प्राप्नोति ॥ ४५ ॥

अथानन्वयः—

**यत्र तेनैव तस्य स्यादुपमानोपमेयता।**
**असादृश्यविवक्षातस्तमित्याहुरनन्वयम् ॥ ४५ ॥**

यत्र एकस्यैव उपमानोपमेयभावः तत्रानन्वयालङ्कारः । नन्वसम्भवो एकस्यैवोपमानोपमेयभावः । सादृश्यस्य भेदघटितत्वात् । सत्यम् । किन्तु एतत्सदृशमन्यन्नास्तीति विवक्षया कविरेवमनन्वितमिव व्यवहरतीति । अन्यत्र एतत्सादृश्यं नास्तीति विवक्षया यत्र प्रकृतस्य प्रकृतेनैव उपमानोपमेयभावो निबध्यते तत्रत्यं वक्ष्यमाणविधमलङ्कारमभिज्ञा अनन्वयनामानमाहुः ॥ ४५ ॥

यथा—

**ताम्बूलरागवलयं स्फुरद्दशनदीधिति ।**
**इन्दीवराभनयनं तवेव वदनं तव ॥ ४६ ॥**

ताम्बूलरागमयवलयशालि । आवक्रलोहितबालचन्द्रकलाकृतिरधरइह वलयत्वेनाध्यवसितः । युक्ततरं पाठान्तरं त्वत्रान्वेष्टव्यम् । 'ताम्बूलरागवलनस्फुरद्दशनदीधिति' इति जातु भवेत् । तव वदनं तव वदनमिव । कान्यत्र एवंविधोऽरुणिम्नोऽवदातिम्नो नीलिम्नश्च मिथःसमागमजन्मा शोभाप्रकर्षोऽनुभवितुं शक्य इत्यभिप्रायः ॥ ४६ ॥

अथोत्प्रेक्षावयवः—

**श्लिष्टस्यार्थेन संयुक्तः किञ्चिदुत्प्रेक्षयाऽन्वितः ।**
**रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथा ॥ ४७ ॥**

श्लिष्टालङ्कारविषयेण किञ्चित् संयुक्तः उत्प्रेक्षया किञ्चिदन्वितः रूपकालङ्कारविषयेण च किञ्चिदन्वितो य उक्तिप्रकारः स उत्प्रेक्षावयवो नामालङ्कारः । उत्प्रेक्षाया अवयवतया निष्पादकतया हि तत्र श्लिष्टस्य रूपकस्य चांशतो घटना ॥ ४७ ॥

अनुबन्धः ।

**तुल्योदयावसानत्वात् गतेऽस्तं प्रति भास्वति ।**
**वासाय वासरः क्लान्तो विशतीव तमोगृहम् ॥ ४८ ॥**

उदय उद्गमः श्रीमत्ता च । अवसानं अस्तमयोऽन्तश्च । विशतीवेति अतत्क्रियायोगादुत्प्रेक्षा । अत्र प्रवेशनक्रियायां हेतुसमर्पकः श्लिष्टार्थः । कर्मकारकसमर्पकः तमोगृहमिति रूपकार्थः । भास्वत्यस्ताचलं प्रति गते तुल्योदयावसानत्वात् स्वयमपि क्लान्तो वासरः विश्रमाय तमोगृहं प्रविशतीव । उत्प्रेक्षाविशेष एवायमिति केचित् । संसृष्टिभेद इत्यन्ये । इमं श्लोकमुदाहृत्य लोचनकार आह—अत्र हि स्वामिविपत्तिसमुचितव्रतग्रहणेहवाक्कुलपुत्रकरूपणमेकदेशविवर्ति रूपकं दर्शयतीति । तमोगृहमित्येकदेशविवर्ति रूपकं वासरस्य कुलपुत्रत्वेन रूपणं प्रत्याययतीति । तमोगुहामिति च तत्र पाठः ॥ ४८ ॥

अथ संसृष्टिः—

**वरा विभूषा संसृष्टिर्बह्वलङ्कारयोगतः ।**
**रचिता रत्नमालेव सा चैवमुदिता यथा ॥ ४९ ॥**

अनेकालङ्कारयोगे संसृष्टिर्नामालङ्क्रिया भवति । सा च प्रत्येकनिवेशितेभ्योऽलङ्कारान्तरेभ्यः श्रेयसी । यथा बहुविधरत्नयोगेन रचिता रत्नमाला एकरूपरत्नरचितमालाभ्यो विशिष्यते तद्वत् । सा चैवंविधा कथिता यथा वक्ष्यते ॥ ॥ ४९ ॥

**गाम्भीर्यलावण्यवतोर्युवयोः प्राज्यरत्नयोः ।**
**सुखसेव्यो जनानां त्वं दुष्टग्राहोऽम्भसां पतिः ॥ ५० ॥**

गाम्भीर्यं विशालता हृदयौन्नत्यं च । लावण्यं सौन्दर्यं लवणमयता च । प्राज्यानि रत्नानि निधित्वात् स्वामित्वाच्च ययोः । एवं समानयोरपि तव समुद्रस्य चास्ति कश्चिद्विशेषः । त्वं जनानां सुखसेव्यः । अम्भसां पतिः दुष्टग्राहः । ग्राहः ग्रहणं उपसेवनम् । क्लेशसाध्यं अनर्थकारि च उपसेवनं यस्य तथाभूतः । अत्र पूर्वार्धे श्लिष्टं उत्तरार्धे व्यतिरेक इत्युभययोगात् संसृष्टिः ।

उद्यानपत्रिका-

धैर्यलावण्यगाम्भीर्यप्रमुखैस्त्वमुदन्वतः ।
गुणैस्तुल्योऽसि भेदस्तु वपुषैवेदृशेन ते ॥

इति दण्डिश्लोक इव 'गाम्भीर्यलावण्यवतोः' इति लावण्यपदेनैवात्र पठितेन भाव्यम् । न तु 'गाम्भीर्यलाघववतोः' इति लाघवपदेन, यथाऽद्य कोशेषु दृश्यते । असङ्गतार्थत्वात् ॥ ५० ॥

यथा वा—

**अनलंकृतकान्तं ते वदनं वनजद्युति ।**
**निशाकृतः प्रकृत्यैव चारोः का वाऽस्त्यलङ्कृतिः ॥ ५१ ॥**

वनजस्य पद्मस्य द्युतिरिव द्युतिर्यस्य, तत् ते वदनं कुण्डलाद्यलङ्काररहितमेव सत् कान्तं भवति । स्वभावत एव रमणीयस्य निशाकरस्य कोऽपरोऽलङ्कारोऽस्ति । अत्र वनजद्युतीति समासाभिहितोपमा । अनलङ्कृतकान्तमिति विभावना । निशाकृत इत्यर्थान्तरन्यास इत्येषां संसृष्टिः । निशाकृतमित्ययुक्तः पाठः ॥ ५१ ॥

इति केषाञ्चिदलङ्काराणां योगेन संसृष्टिः प्रदर्शिता । तत्र नैतन्मन्तव्यम्—एषामेवालङ्काराणां योगे संसृष्टिर्भवति । नान्येषामिति । तदाह—

**अन्येषामपि कर्तव्या संसृष्टिरनया दिशा ।**

ननु तत्र सर्वत्रोदाहरणं दीयताम् । न । कस्मात् । उच्यते—

**कियदुद्घट्टितज्ञेभ्यः शक्यं कथयितुं मया ॥ ५२ ॥**

अल्पं हि सर्वं सुशकं वक्तुम् । उक्तानां त्वलङ्काराणां आवापोद्वापाभ्यां संसृष्टौ क्रियमाणायां अतिमहान् विस्तर आपद्येत । तत्र कात्स्न्र्येन कथनमशक्यम् । नन्वकथितं कथमवगम्यते । नैतदेवम् । उद्घट्टितज्ञा ह्यत्राधिक्रियन्ते । उद्घट्टितं उद्गमितं उद्गृह्य प्रदर्शितं जानन्तीति । ते चाकथितमपि प्रतिपद्यन्त इति न विस्तरवचने यतितव्यम् । अनाधिकृता अपटुधियस्तु कथितमपि न गृह्णन्तीति तेषामपि हेतोर्न विस्तरोऽपेक्षित इति ॥ ५२ ॥

अथ भाविकम्—

अनुबन्धः ।

भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम् ।
प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः ॥ ५३ ॥

अस्त्यलङ्कारान्तरेभ्यो भाविकस्य कश्चिद्विशेषः । प्रतिश्लोकं तानि सम्भाव्यन्ते । भाविकं तु न तथा । किन्तु कृत्स्नं प्रबन्धमेव विषयीकरोतीति । यस्मिन् सति भूता भाविनश्चार्था प्रत्यक्षा इव दृश्यन्ते स भाविकनामा गुणः । नन्वलङ्कारे वक्तव्ये कथं गुणवचनम् । उच्यते । न खल्वन्योऽलङ्कारः अन्यो गुणः । उभयथाऽप्येकार्थाभिधानम् । न तु तत्र मिथो भेद इति । ननु कथमर्थानां प्रत्यक्षायमाणत्वे भाविकत्वाभिधानम् । उच्यते । भावो हि भावना पुनः पुनश्चेतसि निवेशनम् । सोऽत्रास्तीति ॥ ५३ ॥

नैतत् स्वयमुदाहर्तुं शक्यते । ग्रन्थमध्ये प्रबन्धविशेषकरणायोगात् । महाकवीनां तु काव्यविशेषेषु प्रस्फुटाभिव्यक्तार्थवर्णनाविशेषा अत्रोदाहरणत्वेन द्रष्टव्याः । एतदलङ्कारसंपत्त्यनुगुणा सामग्रीतूपदिश्यते—

चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वभिनीतता ।
शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते ॥ ५४ ॥

चित्रः अङ्गभूतरसान्तरमिश्रः उदात्तः गुणातिशयशाली अद्भुतः लोकोत्तरः अर्थः कथावस्तु यस्य तत्त्वम्; कथायाः सर्वप्रकारोचितनिपुणवर्णनागोचरीकृतता; शब्दानामदुष्टता प्रसन्नता चेतीयती भाविकालङ्कारसंपत्तिसामग्री ॥ ५४ ॥

परिच्छेदारम्भ उद्दिष्टास्त्रयोविंशतिरलङ्कारा एवं निरूपिताः । अथायमपरोऽप्याशीर्नामालङ्कारः कैश्चिदिष्यते । स उच्यते—

आशीरपि च केषांचिदलङ्कारतया मता ।
सौहृदय्याविरोधोक्तौ प्रयोगोऽस्याश्च तद्यथा ॥ ५५ ॥

अस्याश्चाशिषः मैत्र्यपायेन शत्रुसमृद्ध्या वा यदि सौहृदय्यस्य सुहृदयत्वस्य सुमनस्कत्वस्य क्वचिद्विरोधः भङ्गः तस्य परिहारे प्रयोगः ॥ ५५ ॥

तद्यथा—

उद्यानपत्रिका-

अस्मिन्नहीहि सुहृदि प्रणयाभ्यसूया-
माश्लिष्य गाढममुमानतमादरेण ।
विन्ध्यं महानिव घनः समयेऽभिवर्ष-
न्नानन्दजैर्नयनवारिभिरुक्षतु त्वाम् ॥ ५६ ॥

'कयोश्चिन्मैत्रीसम्बन्धे पिशुनजनानुप्रवेशेन विच्छायीकृते सति कस्यचिन्नायकस्य तत्स्नेहदार्ढ्यसम्पादनायेयमुक्तिः' इति हेमचन्द्रः । अस्मिन् सुहृदि; यद्यपि त्वं कुपितः तथाप्ययं न परित्यक्तसौहार्दः । प्रणयाभ्यसूयां; तवापि हि नात्यन्तं कोप ईक्ष्यते । प्रणयादेवायमीषत्कोपः । स ते सुत्यजः । कथमेकपदे चिरप्ररूढस्य सौहार्दस्य विप्लव इति विषादेन किंचिदवनतशिरसमेनमादरेण गाढमभितः प्रसारिताभ्यां हस्ताभ्यां श्लिष्य । तेन गाढाश्लेषेण विगतकोपं त्वां पुनः सुहृद्भूतं पश्यन्नयं आनन्दाश्रुभिः समये प्रवृत्त्या समृद्धजलो महान् मेघो विन्ध्यमिव सिंचतु ॥ ५६ ॥

यथा वा—

मदान्धमातङ्गविभिन्नसाला
हताप्रवीरा द्रुतभीतपौराः ।
त्वत्तेजसा दग्धसमस्तशोभा
द्विषां पुरः पश्यतु राजलोकः ॥ ५७ ॥

सालः प्राकारः । द्रुताः प्रधाविताः । पुरः नगराणि । 'पुरीः' इति क्वचित्पाठः । अत्र शत्रुपराजयात् सौहृदय्याविरोधोक्तिः ॥ ५७ ॥

अलङ्कारप्रकरणमुपसंहरति—

गिरामलङ्कारविधिः सविस्तरः
स्वयं विनिश्चित्य धिया मयोदितः ।
अनेन वागर्थविदामलङ्कृता
विभाति नारीव विदग्धमण्डना ॥ ५८ ॥

इति भामहीये काव्यालङ्कारे
तृतीयः परिच्छेदः ।

अनुबन्धः ।

यद्यपि ते तैं विपश्चितः तं तमलङ्कारं सन्तमुपजानन्ति स्म तथाऽपि न तैः सर्वोऽलङ्कारो लक्षणोदाहरणाभ्यां स्फुटं प्रतिपादितः यथाऽत्र मया स्वयं धिया विनिश्चित्योदितः । ननु कथं गिरामलङ्कारविधिरिति । अर्थानामलङ्कारोऽपि ह्युक्तः । सत्यम् । गिरामिति अर्थविशेषप्रतिपादनसमर्थानामेव शब्दानां विवक्षिततथाऽर्थालङ्कारोऽपि गृहीत एव । तदाह अनेन वागर्थविदामिति । अर्थविद्भिः तत्प्रतिपादनार्थं प्रयुक्ता वाक् अनेन विधिनाऽलंकृता यथोचितस्थाननिवेशितमहार्घभूषणा नारीव विभाति काव्यव्यपदेशमापन्ना रसिकहृदयाह्लादनप्रगल्भा भवतीति ॥ ५८ ॥

आपूर्यमाणे पवनेन रन्ध्रे श्रुतिप्रियश्चेत ध्वनिरुज्जिहीते ।
कस्तावता कीचक तेऽभिमानो गीतिर्मदीयेति मनोहरेति ॥

इत्युद्यानवृत्तौ तृतीयः परिच्छेदः ।



॥ श्रीः ॥

# अथ चतुर्थः परिच्छेदः ॥

नमामि स्तौमि याचामि न किञ्चिदनुकम्पते ।
समये किन्तु पश्यामि सर्वं सम्पन्नमात्मनः ॥

एवं परिच्छेदद्वयेन काव्यशोभाहेतुरलङ्कार उक्तः । अथ परिहरणीयत्वाय तदशोभाहेतुभूतान् दोषान् परिच्छेदद्वयेन व्युत्पादयन् तदुद्देशं तावत् करोति—

**अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।**
**शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धि च ॥ १ ॥**
**देशकालकलालोकन्यायागमविरोधि च ।**
**प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टं च नेष्यते ॥ २ ॥**

अत्रागमविरोध्यन्तमस्मिन् परिच्छेदे, प्रतिज्ञाहीनादिकमनन्तरपरिच्छेदे च प्रतिपादयिष्यते । दुष्टं चेति परिगणितदोषातिरिक्तदोषविशेषपरम् ॥ २ ॥

तत्रापार्थं निरूपयन् विवक्षितविवेकाय किञ्चिदाह—

**अपार्थमित्यपेतार्थं स चार्थः पदवाक्ययोः ।**
**अर्थवान् वर्णसंघातः सुप्तिङन्तं पदं पुनः ॥ ३ ॥**

अपार्थमित्यस्य शब्दार्थस्तावदयम्—अपेतोऽर्थो यस्मात् तदिति । तत्रार्थो लोके द्वेधा प्रसिद्धः । तस्मात् द्विविधादप्यन्यादृशोऽर्थ इह विवक्षितः । तत्र प्रथमं तावत् प्रसिद्धोऽर्थ उच्यते । स हि पदार्थो वाक्यार्थ इति द्वेधा भवति । ननु किं पदं नाम ? उच्यते । पदं पुनर्वर्णसमुदायः । ननु कचटेति न पदम् । सत्यम् । अर्थाभावात् । अर्थवान् हि वर्णसमुदायः पदमिष्यते । तदपि पदं सुप्तिङन्तं भवति । रामेत्येतावन्मात्रस्य पदत्वाभावात् । 'रामः' 'जयति' इत्येवमादि हि पदम् । 'सुप्तिङन्त' इत्येव युक्तम् ॥ ३ ॥

अथ किं वाक्यं नाम ? उच्यते--

**पदानामेव संघातः सापेक्षाणां परस्परम् ।**
**निराकांक्षं च तद्वाक्यमेकवस्तुनिबन्धनम् ॥ ४ ॥**

परस्परं साकांक्षाणां पदानां समुदाय एव वाक्यम् । न तु पदेभ्योऽतिरिक्तं किञ्चित् तत्त्वं वाक्यं नाम । तदिदं वाक्यं एकवस्तुनिबन्धनम् । एकं वस्तु निबन्धनं परिच्छेदकं यस्य तथाभूतम् । एकार्थपरिच्छिन्नमित्युक्तं भवति । घटोऽस्तीति हि घटास्तित्वरूप एकोऽर्थः प्रतिपाद्यः । तदेकं वाक्यम् । घटोऽस्ति पटोऽस्तीति तु घटास्तित्वपटास्तित्वयोर्द्वयोः प्रतिपाद्यत्वान्नैकं वाक्यम् । 'न स दिवा विराजते' इत्यत्र नञं विहाय न वाक्यम् । प्रयुक्तस्य नञोऽनन्वये पदान्तराणां साकांक्षत्वात् । तदाह निराकांक्षं चेति ॥ ४ ॥

अत्र शङ्कासमाधाने करोति—

**क्रमवृत्तिषु वर्णेषु संघातादि न युज्यते ।**
**बुद्धौ तु सम्भवस्येतदन्यत्वेऽपि प्रतिक्षणम् ॥ ५ ॥**

यदुक्तं वर्णसंघातः पदम् , तत्संघातो वाक्यमिति तन्न युज्येत । कस्मात् । यस्मात् क्रमवृत्तयो वर्णाः । क्रमेण हि वर्णा उच्चार्यन्ते । यथा गौरित्यत्र गकारौकारविसर्जनीयाः । तेषां कथं संघातसम्भवः । संघातो हि नाम युगपद्वर्तमानता । स कथं क्रमवर्तिनां सम्भवेत् ? ननु प्रथमोच्चारितो गकारो यावत् विसर्जनीयोच्चारणमवतिष्ठते । एवमौकारोऽपि । अन्त्योच्चारिते विसर्जनीये पूर्वयोरपि वर्णयोः सत्त्वात् तयोऽपि युगपद्वर्तिन इति कथं संघातासंभवः । उच्यते । क्षणिका हि वर्णा इष्यन्ते ; न स्थिराः । अन्यथा सकृदुच्चारिता अविरतं श्रूयेरन् । क्षणिकाश्च सन्तो न वर्णान्तरोच्चारणपर्यन्तमवतिष्ठन्त इति । एवं संघातस्यासम्भवे अर्थप्रत्यायकत्वमपि न संभवति । ज्ञातं हि सत् पदं वा वाक्यं वा अर्थं प्रत्याययेत् । तत्र वर्णसंघातात्मनः पदस्यैवाभावे कथं तस्य ज्ञानं ; कथन्तरामर्थप्रत्यायकत्वमिति ।

तदिदमुक्तं संघातादीति । एवं शङ्कायां समाधानमुच्यते । यद्यप्युक्तरीत्या वर्णानां प्रतिक्षणमन्यत्वं तथाऽपि तु एतत् संघातादि बुद्धौ संभवति ; एकबुद्ध्युपारूढाः सन्तः संहता अर्थप्रत्यायकाश्च भवन्तीति ॥ ५ ॥

अत्र सौगतानां मतमाह—

**धीरन्त्यशब्दविषया वृत्तवर्णाहितस्मृतिः ॥**
**वाक्यमित्याहुरपरे न शब्दाः क्षणनश्वराः ॥ ६ ॥**

न क्षणविनाशिनो वर्णा वाक्यम् । अपि तु पूर्वपूर्वश्रुतवर्णजनितस्मृतिरूपा अन्त्यवर्णविषया एका बुद्धिर्वाक्यम् ; इत्यपरे वदन्ति । न चात्र पूर्ववत् संघाताद्यनुपपत्तिविचिकित्सेति ॥ ६ ॥

अत्र विप्रतिपत्तिं सूचयन्नाह--

**अत्रापि बहु वक्तव्यं जायते तत्तु नोदितम् ।**
**गुरुभिः किं विवादेन यथाप्रकृतमुच्यते ॥ ७ ॥**

पूर्वस्मिन्नेव सिद्धान्ते बहु वक्तव्यमस्ति । सन्ति हि तत्र विप्रतिपद्यमानाः केचित् । तत्र वक्तव्यमन्त्ये परिच्छेदे संग्रहेण वक्ष्यते । अत्रापि तु सौगतमते बहु वक्तव्यमुपस्थितं भवति । किन्तु तन्नोच्यते । कुतः । उच्यते । गुरुभिः किं विवादेन । विवाद एव न शोभते । नतरां गुरुभिः । गुरुभिरिति सोपहासम् । पूज्या हि नाम ते नूनं ये सर्ववस्त्वपलापिन इह वर्णानपहुत्य बुद्धेरेव वाक्यत्वमिच्छन्ति । तैः किं विवादं कृत्वा । किञ्च यथाप्रकृतमुच्यते । अप्रकृतश्च सौगतसिद्धान्तप्रतिषेधः । व्युत्पत्तये मतभेदसत्तामात्रं ज्ञापितमिति ॥ ७ ॥

एवं द्विविधोऽर्थो दर्शितः पदार्थो वाक्यार्थ इति । तृतीयोऽप्यर्थोऽस्ति वाक्यसमुदायार्थ इति । यथा—

रावणो राक्षसेन्द्रोऽभूद्रामभार्यां जहार सः ।
रामस्तमवधीत् क्रोधात् को न नश्यत्यधार्मिकः ॥

इति वाक्यचतुष्टयस्य अधर्मो नाचरणीय इत्यर्थः । एवंविधेन समुदायार्थेन

शून्यं यत् तदपार्थतादोषदुष्टमिति सोदाहरणमाह—

**समुदायार्थशून्यं यत्तदपार्थकमिष्यते ।**
**दाडिमानि दशापूपाः षडित्यादि यथोदितम् ॥ ८ ॥**

दश दाडिमानि षडपूपाः कुण्डमजाजिनमित्याद्यपार्थकं महाभाष्ये उदाहृतम् ॥

अथ व्यर्थम्—

**विरुद्धार्थं मतं व्यर्थं विरुद्धं तूपदिश्यते ।**
**पूर्वापरार्थव्याघातात् विपर्ययकरं यथा ॥ ९ ॥**

व्यर्थमिति विविधार्थं विगतार्थमित्यादि न ग्रहीतव्यम् । किन्तु विरुद्धार्थम् । वीत्युपसर्गस्येह विरुद्धपरत्वात् । किं पुनर्विरुद्धमिति । उच्यते । पूर्वोक्तार्थस्य पश्चादुक्तार्थस्य च मिथो विरोधात् यद्वाक्यं विपर्ययं अर्थस्याप्रतीतिं करोति तद्वाक्यं विरुद्धार्थमिति विद्वद्भिरुपादिश्यते ॥ ९ ॥

यथा—

**सखि मानं प्रिये धेहि लघुतामस्य मा गमः ।**
**भर्तुश्छन्दानुवर्तिन्यः प्रेम घ्नन्ति न हि स्त्रियः ॥ १० ॥**

अत्र पूर्वत्र चित्तसमुन्नतिरूपमानसंरक्षणस्य, उत्तरत्र तद्विरुद्धस्य पतिछन्दानुवर्तित्वस्य च निबन्धनादिदं विरुद्धार्थमिति व्यर्थम् ॥ १० ॥

यथा च—

**उपासितगुरुत्वात् त्वं विजितेन्द्रियशत्रुषु ।**
**श्रेयसो विनयाधानमधुनाऽऽतिष्ठ केवलम् ॥ ११ ॥**

हे सौम्य, उपासिता गुरवो येन तथाभूतत्वात् त्वया विजिता वशीकृता ये इन्द्रियरूपाः शत्रवः तेषु अधुना श्रेयसः ; इयं पञ्चमी ; गुणवत्तरस्य विदुषः सकाशात् विनयाधानं विनयस्य दमस्य आधानं सम्पादनं केवलं आतिष्ठ अङ्गीकुरु ; कुर्विति यावत् । गुरूपासनया विजितेष्विन्द्रियेषु पुनर्विनयाधानं निष्फलत्वान्नोपपद्यत इति विरुद्धार्थमिदम् । पूर्वत्र विरोधः साक्षात् । अत्र तु पूर्वमेव कार्यस्य सिद्धत्वादिति भेदः । शक्यमिह केन-

चित् पाठान्तरेण भवितुम् ॥ ११ ॥

अथैकार्थम्—

यदभिन्नार्थमन्योन्यं तदेकार्थं प्रचक्षते ।
पुनरुक्तमिदं प्राहुरन्ये शब्दार्थभेदतः ॥ १२ ॥

इदमेव एकार्थमन्ये पुनरुक्तमिति व्यवहरन्ति । तदपि शब्दार्थकृतभेदन आहुः ; शब्दपुनरुक्तमर्थपुनरुक्तमिति शब्दार्थकृतभेदवन्तमाहुरिति ॥ १२ ॥

अत्र स्वमतमाह—

न शब्दपुनरुक्तं तु स्थौल्यादत्रोपवर्ण्यते ।
कथमक्षिप्तचित्तः सन्नुक्तमेवाभिधास्यते ॥ १३ ॥

शब्दपुनरुक्तं हि नामातिस्थूलो दोषः । स न क्षुद्राणामपि कवीनां वाचि आपतिष्यति । क्षिप्तचित्तो ह्युन्मत्तप्रायः उक्तमुक्तं पुनर्ब्रूयात् । न चैवंविधः कश्चित् कविर्भविष्यति । तस्मात् काव्येष्वप्रसक्तोऽयं दोषः । अप्रसक्तस्य च परिहरणोपदेशो विफल इति ॥ १३ ॥

ननु भयादिषु काममस्ति शब्दपुनरुक्तप्रसक्तिः । बाढम् । किंतु न तत्र स दोषः । भयाद्यभिव्यञ्जकत्वेन शोभाहेतुत्वात् । तदाह—

भयशोकाभ्यसूयासु हर्षविस्मययोरपि ।
यथाऽऽह गच्छ गच्छेति पुनरुक्तं न तद्विदुः ॥ १४ ॥

यदाहेति युक्तं भवितुम् । तथा च यत्र दोषतया परिहार्यता तत्र न प्रसक्तिः । यत्र प्रसक्तिः तत्र न दोषतेति ॥ १४ ॥

एवञ्च —

अत्रार्थपुनरुक्तं यत्तदेवैकार्थमिष्यते ।
उक्तस्य पुनराख्याने कार्यासम्भवतो यथा ॥ १५ ॥

अत्र असत्संप्रदाये । अयं वा कथं दोषः । उच्यते । कार्यासम्भवात् । पदप्रयोगस्य ह्यर्थज्ञानं कार्यम् । तच्चेदेकेन पदेन सिद्धं किं तत्र पदान्तरेण क्रियेत । असिद्धं हि क्रियते, न सिद्धमिति ॥ १५ ॥

यथा—

तामुत्कमनसं नूनं करोति ध्वनिरम्भसाम् ।
सौधेषु घनमुक्तानां प्रणालीमुखपातिनाम् ॥ १६ ॥

प्रवासे स्थितः कश्चिद्वर्षासु स्वेन विरहितां कान्तां प्रतीदमाह । येषां ध्वनिरुत्तमायाः कान्ताया उन्मनस्कतामावहति तैर्नूनमम्भोभिः सौधेषु घनमुक्तैः प्रणालीमुखपातिभिश्च भवितव्यम् । तदस्यार्थस्य अम्भसां ध्वनिरुन्मनसं करोतीत्यनेनैव लाभात् सौधेषु घनमुक्तानां प्रणालीमुखपातिनामिति कृत्स्नमिदं पुनरुक्तार्थमित्यतिमात्ररसिको ग्रन्थकारोऽभिप्रैति ॥ १६ ॥

अथ ससंशयम् । तत्र कः संशयः । स उच्यते—

श्रुतेः सामान्यधर्माणां विशेषस्यानुदाहृतेः ।
अप्रतिष्ठं यदत्रेति तज्ज्ञानं संशयं विदुः ॥ १७ ॥

साधारणधर्माणां श्रवणात् विशेषधर्माणामश्रवणाच्च अत्र अस्मिन्नर्थे तात्पर्यमिति यत् ज्ञानं अप्रतिष्ठं अवधारणारहितं तत् ज्ञानं संशयं विदुः ॥ १७ ॥

ससंशयमिति प्राहुस्ततस्तज्जननं वचः ।
इष्टं निश्चितये वाक्यं न दोलायेत तद्यथा ॥ १८ ॥

यत एवंविधः संशयः ततस्तज्जनकं वाक्यं ससंशयमिति प्राहुः । ननु कथं ससंशयत्वं दोषः । अलङ्कारगोष्ठ्यामपि च ससन्देहस्य गणना । अत्राह । यत्र शोभाहेतुतया सन्देह एव प्रतिपादयितुमिष्टः तत्र स न दोषः । यत्र तु निश्चयजननायैव वाक्यं प्रयुज्यते तत्र जातः सन्देहः अभिमतनिश्चयविरोधित्वाद्दोषो भवतीति* । वाक्यं न दोलायेतेति विधौ लिङ् । वाक्येन डोलायमानेन न भवितव्यम् । यथा डोला मुहुरित आगच्छति ततो गच्छति, तथाऽनिर्णीतार्थं वाक्यं इममर्थं स्पृशति अर्थान्तरं चेति डोलावदाचरणात् डोलायमानता ॥ १८ ॥

---

* संशयप्रभेदविस्तरोऽलङ्कारचूडामणौ ससन्देहप्रकरणे ।

तद्यथा—

व्यालवन्तो दुरारोहा रत्नवन्तः फलान्विताः ।
विषमा भूभृतस्तेभ्यो भयमाशु प्रमादिनाम् ॥ १९ ॥

व्यालवन्तः सर्पवन्तो दुर्जनपरिवृताश्च । दुरारोहाः दुःखेन आरोहणार्हाः चिरकालप्रतीक्षयोपसर्पणीयाश्च । रत्नवन्तः उपलविशेषसमृद्धाः सद्गुणवन्तश्च । फलान्विताः आम्रबदरादिविविधफलवन्तः अर्थिजनाभिवाञ्छिततत्तदर्थवन्तश्च । भूभृतः पर्वता राजानश्च । प्रमादिनां अनवहितानां ; तेभ्यो भूभृद्भ्यः आशु भयम् । दुरारोहं हि पर्वतमारोहन्तः अनवधानेन पदन्यासे सद्य एवातिमात्रमगाधे कण्टकशर्करानिचिते गर्ते अपुनरुत्थानं निपतेयुः । तथा राजसु अनवधानेन किञ्चिदाचरन्तः कदाचित् स्वशिरश्छेदपर्यन्तायास्तदप्रीतेर्भाजनीभवेयुः । इति तेभ्य आशु भयम् । एवमिह सर्वेषां पर्वतराजोभयसाधारण्यात् किं पर्वतो विवक्षित उत राजेति निर्णयाभावात् ससंशयत्वमिति ॥ १९ ॥

अथापक्रमम्—

यथोपदेशं क्रमशो निर्देशोऽत्र क्रमो मतः ।
तदपेतं विपर्यासादित्याख्यातमपक्रमम् ॥ २० ॥

उपदेशे यः क्रमः तेनैव क्रमेणानुनिर्देश इह क्रम इष्यते । विपर्यासात् अन्यथा निर्देशात् तदपेतं उक्तविधक्रमरहितं यद्वाक्यं तद्वक्ष्यमाणोदाहरणसदृशं अपक्रममाख्यायते ॥ २० ॥

विदधानौ किरीटेन्दू श्यामाभ्रहिमसच्छवी ।
रथाङ्गशूले बिभ्राणौ पातां वः शम्भुशार्ङ्गिणौ ॥ २१ ॥

विदधानौ दधानौ । व्युपसृष्टो दधातिर्नैकान्तेन कृञर्थाभिधायीति ग्रन्थकाराभिप्रायः । श्यामाभ्रेण हिमेन च सदृशी छविर्ययोस्तौ । 'पातां वः शार्ङ्गिशङ्करौ' इत्युक्ते नायं दोष इति विभाव्यम् ॥ २१ ॥

अथ शब्दहीनम्—

सूत्रकृत्पदकारेष्टप्रयोगाद्योऽन्यथा भवेत्।
तमाप्तश्रावकासिद्धेः शब्दहीनं विदुर्यथा ॥ २२ ॥

सूत्रकृद्भगवान् पाणिनिः । पदकारः कात्यायनः । भाष्यकारश्चोपलक्ष्यते । तेषामिष्टो यः तस्मादन्यथाभूतो यः प्रयोगः तं शब्दहीनं मन्यन्ते। कस्मात् । आप्तश्रावकासिद्धेः आप्ताः प्रामाणिकवृद्धाः तादृशाः श्रावकाः श्रावयितारः अनुशासितार इति यावत्। तेषामसिद्धेः अभावात् । पाणिनिकात्यायनपतञ्जलय एव हि त्रयः शब्दविषये प्रमाणभूताः। तदनुशासनविरोधेन कृतस्य प्रयोगस्य तादृशाप्तान्तरानुशिष्टत्वाभावादुष्टत्वमिति ॥ २२ ॥

यथा—

स्फुरत्तटिद्वलयिनो विततांम्भोगरीयसः।
तेजस्तिरयतः सौरं घनान् पश्य दिवोऽभितः ॥ २३ ॥

स्फुरद्भिस्तटिद्वलयैर्युक्तान्, बहुसमधिकैरम्भोभिर्गुरुतरान्, सूर्यसम्बन्धि तेजश्छादयतः, गगने सर्वतः स्थितान् मेघान् पश्य । अत्र 'स्फुरत्तटिद्वलयान्' इति बहुव्रीहिणा भाव्यम् । न तु स्फुरन्ति च तानि तटिद्वलयानीति कर्मधारयोत्तरं मतुबर्थेन इनिप्रत्ययेन । यदाहुः—नः कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तत्प्रतिपत्तिकरः—इति । 'वर्णो वर्णेन' इति सूत्रे महाभाष्यपर्यालोचनया चेदमवगम्यते। सर्वधनो बाहुबलीत्यादावेव क्वचित् कर्मधारयादिनिं वार्तिककारोऽनुशास्ति। अत एव 'हंसचिह्नदुकूलवान्' इति महाकविप्रयोगोऽपि प्रौढिमात्रेण समाधेयः । तथा गरीयस इतीयसुन्नसाधुः । 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति द्वयोरेकस्यान्यस्मादतिशये विवक्षिते हि तरबीयसुनोरनुशासनम् । न चात्रातिशयप्रतियोगि किमपि शब्देनोपादीयते, अर्थेन वा लभ्यते। बहुगुरुत्वमात्रं ह्यत्र वक्तुमिष्यते नापेक्षिकातिशयशालि गुरुत्वम्। तस्मादिह ईयसुन्नसाधुः । तथा तिरयत इत्ययुक्तम् । तिर्यक्शब्दात् करोतीत्यर्थे णिचि लटः शतृप्रत्यये द्वितीयाबहुवचने तिराययत

इति रूपात् । तिरःशब्दात् कण्ड्वादित्वात् यकि तिरस्यत इति रूपात् । यदि तु तिर्यगर्थात्तिरःशब्दादेवेह णिच् क्रियते तर्हि नायं शब्दोऽसाधु-रिति ध्येयम् । तथा दिवोऽभित इति षष्ठ्यन्तमसाधु । 'अभितः-परितःसमयानिकषाहाप्रतियोगेऽपि' इति वार्तिककृता द्वितीयाया अनु-शासनादिति ॥ २३ ॥

अथ यतिभ्रष्टम्—

**यतिश्छन्दोऽधिरूढानां शब्दानां या विचारणा ।**
**तदपेतं यतिभ्रष्टमिति निर्दिश्यते यथा ॥ २४ ॥**

का यतिर्नाम । उच्यते । अक्षरसंख्यानियमोपेतपादयुक्तः पदगुम्फश्छन्दः । तत्रत्यानां शब्दानां या छन्दोलक्षणानुसारेण विचारणा विभज्यघटना सा यतिः । 'विधारणा' इति युक्तम् । तया रहितं यतिभ्रष्टमित्युच्यते ॥ २४ ॥

यथा—

**विद्युत्वन्तस्तमालासितवपुष इमे वारिवाहा ध्वनन्ति ॥ २५ ॥**

इयं स्रग्धरा । तत्र सप्तसु सप्तसु वर्णेषु यतिः । 'त्रिमुनियतियुता' इति ह्युक्तम् । साऽत्र भग्ना । असितवपुष इत्यत्रत्यस्य आदेरकारस्य 'ला' इति सप्तमे वर्णेऽन्तर्भूतत्वेन तदन्ते पदविभागाभावात् । 'तमालच्छविहर-वपुषो वारिवाहाः' इति करणे तु न दोषो भवेदिति । वामनस्त्वेवंविधे न दोषं मन्यते । शक्यत्वे त्वेतादृश्यपि रचना परिहार्यैव ॥ २५ ॥

अथ भिन्नवृत्तम्—

**गुरोर्लघोश्च वर्णस्य योऽस्थाने रचनाविधिः ।**
**तन्न्यूनाधिकता वाऽपि भिन्नवृत्तमिदं यथा ॥ २६ ॥**

वृत्तभङ्गो द्वेधा भवति— गुरुलघुवर्णानामस्थाने घटनाकरणेन वा, यस्य वृत्तस्य यावन्तो वर्णा उक्ताः ततो न्यूनाधिकभावेन वेति ॥ २६ ॥

यथा—

भ्रमति भ्रमरमाला काननेषून्मदाऽसौ ।
विरहितरमणीकोऽर्हस्यद्य गन्तुम् ॥ २७ ॥

भ्रेति संयुक्तपरत्वात् 'ति' इति वर्णो गुरुः । लघुना तु भाव्यम् । 'न न म य ययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् । इत्यस्थाने रचनाविधिः । उत्तरत्र तु न्यूनता । त्रयोदशानामेव वर्णानां सत्त्वात् । 'विरहितरमणीकोऽद्यार्हसि त्वद्य गन्तुम्' इति तु स्थिते न दोषः । अयं त्विह श्लोकाभिप्रायः । कान्तया साकं जिगमिषन्तं पुरुषं आप्तः कश्चिद्बोधयति । काननेषु मत्ता भ्रमरमाला भ्रमति । सा नूनं भवत्कान्तावदनारविन्दसौरभलोभजनितसंभ्रमा तत्रभवतीं परिबाधिष्यते । तस्मात् तामिहैव विहाय त्वमेकाकी गन्तुमर्हसीति ॥ २७ ॥

अथ विसन्धि । तत्तूदाहरणेनैव स्पष्टं भविष्यतीति न पृथग्लक्षणमुच्यते—

कान्ते इन्दुशिरोरत्ने आदधाने उदंशुनी ।
पातां वः शम्भुशर्वाण्याविति प्राहुर्विसन्ध्यदः ॥ २८ ॥

कान्ते मनोहारिणी उदंशुनी उद्गतकान्तिनी इन्दुं च शिरोरत्नं च बिभ्राणे यथासङ्ख्यं शंभुशर्वाण्यौ युष्मान् रक्षताम् । इत्येवंविधं विसन्धि प्राहुः । यद्यपि 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति सन्ध्यभावोऽत्र शास्त्रानुशिष्टः तथाऽपि असकृत् तथा प्रयोगः काव्यरसं विच्छिनत्तीति दोष एव ॥ २८ ॥

अथ देशविरोधि—

या देशे द्रव्यसम्भूतिरपि वा नोपदिश्यते ।
तत्तद्विरोधि विज्ञेयं स्वभावात् तद्यथोच्यते ॥ २९ ॥

देशविशेषे द्रव्यसंभूतिर्यादृशी उपदिश्यते ; प्रसिद्धेति यावत् ; अपि वा अथ वा यादृशी नोपदिश्यते; स्वभावात् तत्तद्देशद्रव्यस्वभावं पर्यालोच्य तत्तद्देशविरोधि विज्ञातव्यम् । यद्वा तद्विरोधि उक्तप्रसिद्धिविरोधेन निबद्धं यत् तत् तत् देशविरोधिनामककाव्यदोषस्वरूपं विज्ञेयमिति योजना । शक्यमत

पूर्वार्धे 'अन्यथैवोपादिश्यते' इत्येवंरीत्या पाठान्तरेण भवितुम् । तद्दोषस्वरूपं यादृशं तादृशमुदाह्रियते ॥ २९ ॥

**मलये कन्दरोपान्तरूढकालागुरुद्रुमे ।**
**सुगन्धिकुसुमानम्रा राजन्ते देवदारवः ॥ ३० ॥**

कन्दराणां गुहानां समीपे प्ररूढाः कालागुरुद्रुमाः यस्मिन् तस्मिन् । मलयपर्वते चन्दनानां समृद्धिर्लोके काव्ये च प्रसिद्धा । न तु कालागुरूणां देवदारूणां चेति देशविरोधीदम् ॥ ३० ॥

अथ कालविरोधि—

**षण्णामृतूनां भेदेन कालः षोढेव भिद्यते ।**
**तद्विरोधकृदित्याहुर्विपर्यासादिदं यथा ॥ ३१ ॥**

यद्यप्यखण्डात्मा एकः कालः तथापि प्रतिनियतलिङ्गशालिषड्तुभेदेन स षड्विध इव भवति । तत्र एकस्मिन् काले प्रसिद्धस्य वस्तुनः विपर्यासेन अन्यस्मिन् काले निबन्धने कालविरोधीत्याहुः । इदं यथा तथोच्यते । ३१

**उदूढशिशिरासारान् प्रावृषेण्यान् नभस्वतः ।**
**फुल्लाः सुरभयन्तीमे चूताः काननशोभिनः ॥ ३२ ॥**

प्रावृषि चूतानां फुल्लतासौरभसमृद्ध्यादि न सम्भवतीति इदं कालविरोधि ॥

अथ कलाविरोधि—

**कला संकलना प्रज्ञा शिल्पान्यस्याश्च गोचरः ।**
**विपर्यस्तं तथैवाहुस्तद्विरोधकरं यथा ॥ ३३ ॥**

कलयति लोकशास्त्रावेक्षणेन चराचरात्मकस्य जगतः सुखदुःखानुषङ्गितां संकलय्य गृह्णातीति कला विलक्षणा प्रज्ञा । सैषा अस्य पदस्य व्युत्पत्तिः । तस्या विषयीभूत फलन्तु शिल्पानि चित्रलेखनं प्रतिमानिर्माणं संगीतमित्येवमादीनि रसाभिव्यञ्जनादितत्पराणि कर्माणि । तादृशप्रज्ञाविशेषप्रयोज्यत्वादेतान्यपि कलापदाभिधानीयकं लभन्ते । पूर्ववदेतत्सम्बन्धिनियमविपर्यासेन निबद्धं कलाविरोधीत्याहुः ॥ ३३ ॥

यथा—

ऋषभात् पञ्चमस्तस्मात् सषड्जं धैवतं स्मृतम् ।
अयं हि मध्यमग्रामो मध्यमोत्पीडितर्षभः ॥ ३४ ॥
इति साधारितं मोहादन्यथैवावगच्छति ।
अन्यास्वपि कलास्वेवमभिधेया विरोधिता ॥ ३५ ॥

षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादास्तावत् सप्त स्वराः । एष्वेकैकोऽपि अनेकश्रुत्यारब्धः । श्रुतिस्वरयोर्भेदं पुनरेवमाहुः—

'अत्र पञ्च पक्षाः संभवन्ति । श्रवणैकेन्द्रियग्राह्यत्वाद्विशेषस्पर्शशून्ययोः स्वरश्रुत्योर्जातिव्यक्त्योरिव तादात्म्यमिति प्रथमः पक्षः । दर्पणे मुख-विवर्तवच्छ्रुतिषु स्वरा विवर्तन्त इति द्वितीयः । यथा घटस्य मृत्पिण्ड-दण्ड(?)कार्यत्वं तथा स्वराणां श्रुतिकार्यत्वमिति तृतीयः । क्षीरं दधि-रूपेणेव श्रुतयः स्वररूपेण परिणमन्त इति चतुर्थः । प्रदीपादन्धका-रस्थितघटाद्यभिव्यक्तिवच्छ्रुतिभ्यः स्वराणामभिव्यक्तिरिति पञ्चमः । नाद्यः । स्वरश्रुत्योर्भिन्नबुद्धिग्राह्यत्वादाश्रयाश्रयित्वभेदाच्च । जातिव्य-क्त्योरपि निर्विशेषं न सामान्यमिति न्यायेन भेदस्य सिद्धत्वाच्च । न द्वितीयः । विवर्तत्वे हि स्वराणां भ्रान्तत्वं स्यात् । न च तथा । तेषाम-बाधितप्रयोगहेतुत्वदर्शनात् । तृतीयोऽपि न परीक्षाक्षमः । स्वरव्यति-रेकेण श्रुतिसद्भावे प्रमाणाभावादिति वक्तुं हि न युक्तम् । स्वरस्य हि श्रूयमाणमनुरणनात्मकत्वं रणनमन्तरेण नोपपद्यत इत्यर्थापत्त्या वा, अयं स्वरो रणनपूर्वकः, अनुरणनात्मकत्वात् ; दण्डाहतजयघण्टानुरणनशब्द-वदित्यनुमानेन वा तत्सिद्धेः । सत्यम् , यद्यपि स्फुटपौर्वापर्येण कार्य-कारणभावप्रतीतिरस्ति तथाऽप्युपादानस्य मृत्पिण्डादेर्यथा घटादिकार्य-निष्पत्तौ भेदेनानुपलब्धिर्न तथेह स्वरनिष्पत्तौ श्रुतीनामु(मनु?) पलम्भ इति तासामकारणत्वान्न तृतीयः । चतुर्थपञ्चमावदुष्टत्वे मतङ्गादि-संमतत्वाद्ग्राह्यौ । इति ।

तत्र क्रमेण सप्तानां स्वराणां चतस्रः तिस्रः द्वे, चतस्रः, चतस्रः तिस्रः द्वे इत्येवंसंख्याः श्रुतयः । कदाचित्तु अन्तिमो निषादः आद्यस्य षड्जस्य द्वे श्रुती संश्रित्य चतुःश्रुतिर्भवति । तदानीं तस्य काकलीसंज्ञा । एवं कदाचित् तृतीयो गान्धारः चतुर्थस्य मध्यमस्य द्वे श्रुती संश्रित्य चतुः-श्रुतिर्भवत्ति । तदा तस्य अन्तरसंज्ञा । एषां स्वराणां समूहो ग्राम इत्युच्यते । विकारलेशेनापि वर्जितोऽयं सप्तस्वरसमूहः षड्जग्राम इत्याख्यायते । यदा तु पञ्चमः त्रिश्रुतिर्भवति धैवतश्च पञ्चमस्य चतुर्थीं श्रुतिमाक्रम्य चतुःश्रुतिः तदा मध्यमग्रामो भवति । अत्र ग्रामद्वये 'साधारणविधिः' इति प्रकारान्तरमप्यस्ति । षड्जस्वरसम्बन्धिनीषु चतसृषु श्रुतिषु आद्यां निषादः अन्त्यां ऋषभश्च यदि संश्रयति तदा षड्जस्य पूर्वोत्तरस्वरसाधारण्यात् षड्जसाधारणं भवति । एवं मध्यमस्य आद्यान्त्ये श्रुती यदि गान्धारपञ्चमौ श्रयतः तदा मध्यमसाधारणमिति ज्ञेयम् । एवमेव पूर्वोक्तकाकल्याः शुद्धषड्जनिषादोभयसम्बन्धित्वात् अन्तरस्य शुद्धगान्धारमध्यमोभयसम्बन्धित्वाच्च काकलीसाधारणमन्तरसाधारणमित्यपि द्वे साधारणे भवतः । आहत्य स्वरसाधारणं चतुर्विधम् । तदुक्तम्—

स्वरसाधारणं तत्र चतुर्धा परिकीर्तितम् ।
काकल्यन्तरषड्जैश्च मध्यमेन विशेषणात् ॥ इति ।

तत्र काकल्यन्तरसाधारणयोः प्रयोगे अस्ति विशेषः । काकलीसाधारणे षड्जमुच्चार्य काकलीधैवतौ क्रमादुच्चारयेत् । यद्वा षड्जं काकलीं पुनः षड्जं चोच्चारयेत् । ततः परं तत्सन्निहितं स्वरान्तरम् । एवमन्तरसाधारणे मध्यमः अन्तरः ऋषभः इति मध्यमः अन्तरः पुनर्मध्यम इति वा क्रमेणोच्चार्य ततः परं तत्सन्निहितं स्वरान्तरमिति । तदेवंविधा सङ्गीतशास्त्रे स्वरसाधारणविधिस्थितिः । तद्विरुद्धमिदं ऋषभात् पञ्चम इत्यादि । न हि काकलीसाधारणे अन्तरसाधारणे वा ऋषभः ततः पञ्चमः ततः षड्जः

ततो धैवत इति क्रमेण स्वरोच्चारणं प्रसिद्धमस्ति । तथा मध्यमसाधारणं 'मध्यमोत्पीडितर्षभः' इत्येतदप्रसिद्धम् । पीडनं नाम उत्तरस्वरेण पूर्वस्य स्वात्मत्वापादनम् । मध्यमस्यान्तिमां श्रुतिं संश्रयन् पञ्चमो हि तत्र मध्यमं पीडयति । न तु स्वयमन्येन पीड्यमानो मध्यमः स्वपूर्वगान्धारव्यवहितं ऋषभं पीडयतीति प्रसक्तिरप्यस्ति । तस्मादेवं वदन् मौग्ध्यात् साधारणं अयथावदेव गृह्णाति । साधारितं साधारणमित्येकार्थम् । इत्येवं सङ्गीतकलाविरोध्युदाहारि । कलान्तराविरोध्यपि एवंरीत्या वक्तव्यम् । अत्र पञ्चमादिति पञ्चम्यन्तं पठ्यमानं न बुध्यामहे तथा धैवतमिति क्लीबत्वमपि चिन्त्यमित्याहुः ॥ ३५ ॥

अथ लोकविरोधि—

स्थास्नुजङ्गमभेदेन लोकं तत्त्वविदो विदुः ।
स च तद्व्यवहारोऽत्र तद्विरोधकरं यथा ॥ ३६ ॥

क इह लोकपदार्थः । स उच्यते । स्थावरजङ्गमात्मकं यद्भूतजातं तल्लोकपदाभिधेयमिति तत्त्वविदां मतम् । अत्र पुनः काव्यलक्षणे तस्य लोकपदार्थस्य यो व्यवहारः प्रवृत्तिनिवृत्तिरूपः स तेन पदेनाभिधीयते । तद्विरोधि उदाह्रियते ॥ ३६ ॥

यथा—

तेषां कटतटभ्रष्टैर्गजानां मदबिन्दुभिः ।
प्रावर्तत नदी घोरा हस्त्यश्वरथवाहिनी ॥ ३७ ॥

तेषां जङ्गमपर्वतकल्पानाम् । कटतटं गण्डस्थलम् । घोरा आवर्तमालाशालितया भयङ्करी । महत्तमानामपि गजानां मदप्रस्रवणात् एवंविधमहानदीप्रवृत्तिर्लोके न दृष्टचरी । तस्मादिदं लोकविरोधि ॥ ३७ ॥

यथा च—

धावतां सैन्यवाहानां फेनवारि मुखाच्युतम् ।
चकार जानुदघ्नापान् प्रतिदिङ्मुखमध्वनः ॥ ३८ ॥

वाहा अश्वाः । दिशि दिशि मार्गान् जानुप्रमाणा आपो येषु तथा-विधान् चकार । न चैवं क्वचिल्लोके दृश्यत इति इदमपि लोकविरोधि । अतिसंख्याः कवय एवमसकृद्वर्णयन्तीति तत्रानौचित्यवैशद्यायोदाहरणभेदः ॥

अथ न्यायविरोधि—

न्यायः शास्त्रं त्रिवर्गोक्तिर्दण्डनीतिं च तां विदुः ।
अतो न्यायविरोधीष्टमपेतं यत्तया यथा ॥ ३९ ॥

को न्यायः । उच्यते । नीयते व्युत्पाद्यते अनेनेति न्यायः शास्त्रम् । त्रिवर्गोक्तिरूपः शास्त्रविशेष इह विवक्षितः । धर्मार्थकामात्रितयरूपस्य त्रिवर्गस्य उक्तिः । प्रतिनियततत्तच्छास्त्रलोकावगतानां धर्मार्थकामानां लोके निरपायपरिरक्षणोपायप्रतिपादनपरो विद्यास्थानविशेष इत्यर्थः । किन्नामेदं विद्यास्थानम् । तदाह दण्डेति । तां च दण्डनीतिं विदुः । यद्वा त्रिवर्गोक्तिरिह न्यायः । राष्ट्ररूपार्थपरत्वात् दण्डनीतिरपि न्यायं विदु-रिति द्रष्टव्यम् । तया न्यायपदवाच्यया दण्डनीत्या अपेतं वर्जितं न्याय-विरोधीष्टम् ॥ ३९ ॥

यथा— बृहत्कथादिप्रतिपाद्ये प्रतिज्ञायौगन्धरायणादिरूपककारैरुपजी-विते वासवदत्तावत्सराजसमागमप्रधाने कथावस्तुनि बहवो न्यायविरोधाः । तथा हि—

विजिगीषुमुमन्यस्य वत्सेशं वृद्धदर्शनम् ।
तस्यैव कृतिनः पश्चादभ्यधाच्चारशून्यताम् ॥ ४० ॥

वृद्धैः यौगन्धरायणप्रभृतिभिर्नीतिनिष्णातैः सचिवैः दर्शनं कार्याकार्यविवेको यस्य तथाभूतं चोपन्यस्य । कृतिनः स्वयमपि कुशलस्य । न च विजिगी-षोः पदे पदे कृत्स्नपरप्रकृतिविज्ञानेऽवश्यसम्पाद्ये चारशून्यता न्याय्येति न्यायविरोधः ॥ ४० ॥

अन्तर्योधशताकीर्णं सालङ्कायननेतृकम् ।
तथाविधं गजच्छद्म नाज्ञासीत् स स्वभूगतम् ॥ ४१ ॥

नीतिनिपुणः सालङ्कायनो हि परपक्षमन्त्री । सर्वदा तस्य निमिषिताद्यपि ज्ञातव्यं विजिगीषुणा वत्सराजेन । चर्मणा कृतः नीलगजः अन्तःस्थितशत-सैनिकः गजग्रहणकौतूहलिवत्सराजग्रहणाय स्थापितः अवश्यमेव ज्ञातव्यः । सोऽपि स्वदेशमागतः सुखतरं ज्ञायेत । एवमपि स तन्नाज्ञासीदिति न युज्यते ॥ ४१ ॥

अथोच्येत सचिवैरनिवेदनात् स तन्नाज्ञासीदिति ; तन्न शोभनम् । तदा हि तेषां दोषः प्रसज्यते । तथा हि—

**यदि वोपेक्षितं तस्य सचिवैः स्वार्थसिद्धये ।**
**आहो नु मन्दिमा तेषां भक्तिर्वा नास्ति भर्तरि ॥ ४२ ॥**

स्वभर्तृग्रहणाय प्रवर्तितं गजच्छद्म ज्ञातवद्भिरपि सचिवैः स्वप्रयोजनदत्तदृष्टि-भिः राज्ञे तदनिवेदितमिति तेषां स्वार्थपरता प्रसज्येत । सर्वथा तदज्ञाने बुद्धिमान्द्यम् । अस्वार्थपरा ज्ञातवन्तश्च यदि तूष्णींभावमास्थिताः तर्हि भर्तरि भक्तिर्नास्तीति प्रसज्येत । न च विजिगीषोरेवंविधसाचिव्यवत्ताप्रतिपा-दनं न्याय्यमिति स्थित एव न्यायविरोधः । 'अहो नु' इति तु न युक्तः पाठः ॥ ४२ ॥

किं च—

**शरा दृढधनुर्मुक्ता मन्युमद्भिररातिभिः ।**
**मर्माणि परिहृत्यास्य पतिष्यन्तीति काऽनुमा ॥ ४३ ॥**

अनुमा केति क्षेपः । निश्चेतुं सामग्री नास्तीत्यर्थः । तेन एकाकिनो वत्स-राजस्य गजमृगयाहेतोस्तत्र गमनप्रतिपादनं न नीत्यनुसारि । नापि वासव-दत्ताहेतोर्वत्सराजं जीवग्राहं जिघृक्षतामरातीनां मन्युमतां तस्मिन् दृढधनु-र्मुक्तशरप्रहारो युक्तः ॥ ४३ ॥

ननु न ते मन्युमन्तः । उच्यते—

**हतोऽनेन मम भ्राता मम पुत्रः पिता मम ।**
**मातुलो भागिनेयश्च रुषा संरब्धचेतसः ॥ ४४ ॥**

अस्यन्तो विविधान्याजावायुधान्यपराधिनम् ।
एकाकिनमरण्यान्यां न हन्युर्बहवः कथम् ॥ ४५ ॥

इतिशब्दमध्याहृत्य 'इति रुषा संरब्धचेतसो बहव' इति योज्यम् । अनेन मम भ्राता हतः मम पुत्रो हतः मम पिता हत इति ते संरब्धचेतसोऽभवन्निति कविनैव हि कण्ठोक्त्या प्रत्यपादि । तथा विविधायुधप्रक्षेपश्च । अपराधी च वत्सराजः । तथा सति कथं ते न मन्युमन्तः । किं चायमेकाकी । ते बहवः । तस्मादत्र वधाभावचिन्ता न न्याय्येति ॥ ४५ ॥

नन्वेतत्सर्वं समञ्जसं समर्थितमन्यैर्विचक्षणैः । उच्यते ।

नमोऽस्तु तेभ्यो विद्वद्भ्यो येऽभिप्रायं कवेरिमम् ।
शास्त्रलोकावपास्यैवं नयन्ति नयवेदिनः ॥ ४६ ॥

आस्तां तावच्छास्त्रम् । लोकरीत्याऽपि सर्वमिदं विरुद्धम् । तदुभयमविचिन्त्य ये नयवेदिमानिनः एवंविधमेवेमं कवेरभिप्रायं समर्थयन्ते तेभ्यो नमः केवलमस्तु । न हि ते स्वयमिहानुपपत्तिमपश्यन्तः अस्मादृशैः प्रतिबोधयितुं शक्यन्त इति हृदयम् । नयवेदिन इति कवेरपि सोत्प्रासं विशेषणं भवितुमर्हति ॥ ४६ ॥

किं चायं कृत्रिमगजोपाय एव सर्वथाऽनुपपन्नः । तथा हि—

सचेतसो वनेभस्य चर्मणा निर्मितस्य च ।
विशेषं वेद बालोऽपि कष्टं किन्नु कथं नु तत् ॥ ४७ ॥

जीवतो गाम्भीर्यनिर्धर्वनगजस्य चर्मनिर्मितस्यातिदुर्भगस्य गजाभासस्य च शिशुरपि भेदं जानाति । किं पुनरखण्डराज्यपरिपालनधुरन्धरो वत्सराजः । प्रकृतेऽस्ति विशेष इति चेत् क इह भेदवेदने क्लेशः । स च किंविधः किन्निमित्तः । किमिति क्षेपे । विशेषवेदने क्लेशहेतुर्नास्ति । अत एव क्लेशोऽपि नास्तीति ॥ ४७ ॥

इति न्यायविरोधि । अथागमविरोधि—

आगमो धर्मशास्त्राणि लोकसीमा च तत्कृता ।
तद्विरोधि तदाचारव्यतिक्रमणतो यथा ॥ ४८ ॥

धर्मशास्त्राणि धर्मावबोधीनि श्रुतिस्मृतिरूपाणि । तत्प्रमेयो ह्यर्थो धर्मः । तदनुसारिणी लोकमर्यादा चागमः । शास्त्रतदनुसारिलोकमर्यादासिद्धाचारातिलङ्घने आगमविरोधि विज्ञेयम् ॥ ४८ ॥

यथा—

भूभृतां पीतसोमानां न्याय्ये वर्त्मनि तिष्ठताम् ।
अलङ्करिष्णुना वंशं गुरौ सति जिगीषुणा ॥ ४९ ॥
अभार्योढेन संस्कारमन्तरेण द्विजन्मना ।
नरवाहनदत्तेन वेश्यावान् निशि पीडितः ॥ ५० ॥

यद्यधार्मिककुलप्रसूत एव कश्चिन्नायकीक्रियेत तदीयानि चातिक्रमचरितानि वर्ण्येरन् न तदाऽऽगमविरोधिनिबन्धनं दोषाय । तदाह—न्याय्ये वर्त्मनि तिष्ठतामिति । एवंविधानां राज्ञां सोमपानमागमविरुद्धम् । 'यदि राजन्यं वैश्यं वा याजयेत्.... ....न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत् ; न सोमम्' इति राजन्यवैश्ययोः सोमभक्षप्रतिषेधश्रवणात् । तथा महावंशालङ्करणोचितगुणपौष्कल्यवतः गुरौ सति जिगीषुत्वमागमविरुद्धम् । गुरुमतिक्रम्य क्रियमाणायाः सर्वप्रकाराया वृत्तेर्निषिद्धत्वात् । तथा संस्कारमन्तरेण द्विजन्मत्वं विरुद्धम् । उपनयनाख्यसंस्कारेणैव द्वितीयजन्मसिद्धेः । 'द्वितीयं मौञ्जिबन्धनात्' इति हि स्मरन्ति । तथा भार्याधिगमात् पूर्वं वेश्याप्रसङ्गो ब्रह्मचर्यभङ्गावहत्वात् विरुद्धः । तत्रापि सर्वसाधारणीं वेश्यां भजतोऽन्यस्य पीडनं शास्त्राननुरोधि । सुतरां निशि । वेश्याहि यस्मिन् दिने यं भजति तस्य तस्मिन् दिने भार्याकल्पा । तदाऽन्यस्य तत्र प्रसङ्गो न धर्म्यः । स्वयं राजा सन् यदि कश्चित्तथा कुर्यात् तन्न तस्य विशिष्टकुलशीलविधानामनुगुणमिति । नरवाहनदत्त इति राज्ञो नाम ॥५०॥

अथ गभीरां प्रतिज्ञाहीनादिचिन्तां परिच्छेदान्तरेण करिष्यन् इह अप्रौढानालङ्कारिकान् किंचित् प्रतिबोधयन्नाह —

न दूषणायायमुदाहृतो विधि-
र्न चाभिमानेन किमु प्रतीतये ।
कृतात्मनां तत्त्वदृशां च मादृशो
जनोऽभिसन्धिं क इवावभोत्स्यते ॥ ५१ ॥

अयं विधिः प्राचां कवीनां सूक्तिषु दोषोद्भावनविधानं न दूषणाय तेषां यशसि मालिन्योत्पादनोद्देशेन न प्रवृत्तम् । न चाभिमानेन; अहं तेभ्यो विशिष्टप्रज्ञ इत्यात्मोत्कर्षमत्याऽपि न । किमु किन्तु प्रतीतये लक्षितानां दोषाणां व्युत्पत्तये केवलम् । उदाहरणैरेव हि व्युत्पाद्यार्थवैशद्यं जायते । अतस्तन्मात्रार्थतया तद्विधानम् । ननु तत्त्वत एव तेषां सूक्तयः सावद्याः किं न स्युः ; तत्राह कृतात्मनामिति । कृतात्मानः सुशिक्षितमतयः अत एव तत्त्वदर्शिनो न भ्रान्ताः । तेषामभिप्रायं मद्वदल्पप्रज्ञः को ज्ञास्यति । तस्मादुदाहरणप्रदर्शननिर्बन्धेन दोषस्तत्रास्तीति कृत्वा प्रदर्शनम् । न तु वस्तुतो दोषवत्तया । कश्चिन्मार्ग इह प्रदर्शित इति कृत्वा काव्यलक्षणज्ञमानिनोऽगृहीतकविहृदया एव दोषोद्घाटनकौतूहलिनो दिव्याः प्राचां कविसिंहानां सूक्तीर्मा विनीनशन्निति ग्रन्थकारस्य हृदयम् । 'किमु प्रतीयते' इति पठ्यमानं न सम्यक् ।

इच्छामि कर्तुं न च पारयामि
किञ्चित् कदाचित् पुनरत्र किञ्चित् ।
इच्छाम्यकर्तुं न च पारयामि
कर्ता किमेषोऽस्म्युत कश्चिदन्यः ॥

इत्युद्यानवृत्तौ चतुर्थः परिच्छेदः ।

---

# अथ पंचमः परिच्छेदः ।

व्याददाति मुखं व्याघ्रः सर्पोऽयमभिसर्पति ।
वनमानीय विजहावथापि परिपाति माम् ॥

अवधेयतया परिच्छेदार्थतया च पुनः प्रतिजानीते—

**अथ प्रतिज्ञाहेत्वादिहीनं दुष्टं च वर्ण्यते ।**
**समासेन यथान्यायं तन्मात्रार्थप्रतीतये ॥ १ ॥**

ननु प्रतिज्ञादयो नैयायिकैर्महता प्रबन्धेन निरूपिताः परार्थानुमानापरपर्यायस्य न्यायस्यावयवाः । तेषां कथमिह निरूपणं शक्यम् । तत्राह समासेनेति । न हि तावान् विस्तर इह करिष्यत इति । समासोऽपि कियान् । प्रतिज्ञादिशब्दमात्रस्य योऽर्थः स यावता ज्ञातो भवेत् तावान् । तदाह तन्मात्रेति । न तु तदीयलक्षणपरिष्कारकोलाहलस्यांशांशेऽपि दृष्टिर्दास्यत इति । ननु नैयायिकवैशेषिकबौद्धादीनां भिन्नभिन्नानि प्रस्थानानि । तत्र कतमदनुस्रियत इत्यत्राह यथान्यायमिति । यद्युक्तियुक्तं तत्तत्रतत्रानुसरिष्यत इति ॥ १ ॥

ननु तत्तत्प्रस्थानानुसारिभिरेव समासेन तत्तदर्थव्युत्पादनं तत्तत्प्रकरणग्रन्थैर्यावदपेक्षितसंग्रहशालिभिः कृतमुपलभ्यते । तत्र को भवतोऽवकाशः । अत्रोच्यते—

**प्रायेण दुर्बोधतया शास्त्राद्बिभ्यत्यमेधसः ।**
**तदुपच्छन्दनायैष हेतुन्यायलवोच्चयः ॥ २ ॥**

दुर्बोधानि हि प्रायः शास्त्राणि । ततो मन्दधियो भीतास्तत्र न प्रवर्तन्ते । तथा महती तेषां ततो भीतिः यथा ललितेषु तत्तत्प्रकरणग्रन्थेष्वपि महानुद्वेगो भवति । न तथाऽतिकठिनाः शास्त्रार्थाः अतो न भेतव्यमिति तेषां हृदयप्रसादनाय एष करिष्यमाणः हेतुन्यायलवोच्चयः हेतुरनुमानं तस्य न्यायः प्रामाण्ययुक्तिः तस्याल्पांशस्य उच्चयः घटनं निबन्धनमिति यावत् ॥ २ ॥

ननु काव्यलक्षणे प्रवृत्तस्य हेतुन्यायनिरूपणे का सङ्गतिः । न च वाच्यं यत्र काव्ये हेतुन्यायस्यापि सङ्घटना दृश्यते तत्र साध्वसाधुविवेकाय सोऽपि काव्यलक्षणकारैर्विवेक्तव्य इति । रसमये काव्यमार्गे हेतुन्यायसङ्घटनाया वैयर्थ्येन तादृशस्य काव्यस्याभावात् । सहृदयचेतःसमाराधनपरतया हि काव्यस्य प्रवृत्तिः । तत्र का प्रसक्तिर्हेतुर्न्यायसङ्घटनाया इति । उच्यते—

**स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते ।**
**प्रथमालीढमधवः पिबन्ति कटु भेषजम् ॥ ३ ॥**

सत्यं प्रीतिप्रधानं काव्यम् । व्युत्पत्तिरपि तु फलं सम्भवन्ती न निराक्रियते । ये हि शास्त्रेषु शालीनमतयः अथ च तत्रावश्यं व्युत्पाद्याः तादृशानुद्दिश्य प्रवर्तमानाः खलु कवयः शास्त्रार्थानपि स्वकृतिषु प्रतिपादयन्ति, रसप्ररोचिताः सन्तः तदुपसिक्तान् शास्त्रार्थानपि ग्रहीष्यन्तीति । काटवात् विभ्यतोऽपि हि लोके प्रथमं मधुरमास्वाद्य भेषजमुपयुञ्जते । तदस्ति काव्येषु हेतुन्यायनिबन्धनस्यावसर इति ॥ ३ ॥

स्यादेतत् । यद्यप्येवं फलं सम्भाव्यते तथापि शास्त्रार्थघटना काव्येषु न युज्यते । अन्यो हि काव्यस्यार्थः अन्यः शास्त्रस्य । वक्ष्यते च 'तत्र लोकाश्रयं काव्यमागमास्तत्त्वदर्शिनः' इति । तदुच्यते —

**न स शब्दो न तद्वाच्यं न स न्यायो न सा कला ।**
**जायते यन्न काव्यांगमहो भारो महान् कवेः ॥ ४ ॥**

तत्तत्काव्यविशेषभेदेन तावत् सर्वे शब्दा अङ्गं भवन्ति । क्वचिल्ललिताः क्वचित् परुषाः क्वचिन्मध्यमा इति । संस्कारहीना अपि च शब्दा बालभीतादिव्यवहारेषूपयुज्यन्ते । एवं सर्वेऽर्थाः । यथाऽऽहुः—

रम्यं जुगुप्सितमुदारमथापि नीच-
मुग्रं प्रसादि गहनं विवृतं च वस्तु ।

यद्वाऽप्यवस्तु कविभावकभाव्यमानं
तन्नास्ति यन्न रसभावमुपैति लोके ॥

एवमेव सर्वो न्यायः सर्वः शास्त्रार्थः सर्वा च कला काव्याङ्गं भवति। अत एव हि कवित्वं मितज्ञदुरासदम् । महान् हि भारः कवेः ॥ ४ ॥

प्रमाणविशेषहेतुन्यायनिरूपणोपयोगितया प्रमाणसामान्यफलं प्रदर्शयन् प्रमाणं विभजते—

**सत्त्वादयः प्रमाणाभ्यां प्रत्यक्षमनुमा च ते।**

प्रमाणाभ्यां सत्त्वादयः द्रव्यगुणादयः पदार्थाः सिद्ध्यन्ति । मानाधीना हि मेयसिद्धिः । सत्त्वमिति वैयाकरणसम्प्रदायवासनया द्रव्ये। पदार्थानां सत्त्वासत्त्वतुच्छत्वादीनि वा सत्त्वादय इत्युक्तानि। द्विवचनेन प्रमाणद्वैविध्यमुक्तम्। के ते। प्रत्यक्षमनुमा च।

स्थितं तावदेतत् न्यायादिनये यदिन्द्रियसन्निकृष्टोऽर्थः प्रत्यक्षस्य विषयः। असन्निकृष्टोऽनुमानस्येति। सौगतास्त्वाहुः—

**असाधारणसामान्यविषयत्वं तयोः किल ॥ ५ ॥**

प्रत्यक्षस्य असाधारणं विषयः। सर्वेतरव्यावृत्ता तत्तद्व्यक्तिः असाधारणमुच्यते। एतत् स्वलक्षणमित्यपि व्यवह्रियते । तद्भिन्नं सर्वव्यक्त्यनुगतं सामान्यम्। एतदनुमानस्य विषयः। किलेत्यनङ्गीकारे। तदाहुः—उन्मीलितनेत्रस्य विकल्पोऽपि गौरयमित्यपरोक्षावभास एव प्रतीयते । न ह्ययं परोक्षापरोक्षविभागो विषयकृतः । यदि हि तथा स्यात् सर्वदैव सामान्यं परोक्षं स्यात्। न चैवमस्ति । सामान्याकारस्यापि परोक्षापरोक्षविभागदर्शनात्। तथा हि। श्वेतं स्वलक्षणं पश्यन् अनिर्धारितगवाश्वजातिविशेषः हेषाशब्दश्रवणादश्वत्वं तस्मिन्नेव स्वलक्षणे अनुमिमानोऽपि परोक्षं बुद्ध्यते । वदन्ति हि 'अश्वोऽप्ययं न चक्षुषा तथाऽवभासते' इति । प्रत्यासन्नस्तु वदति 'संप्रत्यश्वत्वमप्यस्य चक्षुषा पश्यामि न पूर्वम्' इति। स्वलक्षणं तु प्रागपि

विशदमेवेति सामान्यांशगत एवायं दूरसमीपवर्तिनः परोक्षापरोक्षविभागः । तस्मात् कारणकृतोऽयं विभागः— इति ॥ ५ ॥

विषयाचिन्ता तावदास्ताम् । लक्षणमेव तेषां प्रत्यक्षस्य दुःस्थितम् । तथा हि । दिङ्नागप्रभृतयस्तावदाहुः—

**प्रत्यक्षं कल्पनापोढं**

इति । वसुबन्धुस्त्वन्यदाह । तदुच्यते—

**ततोऽर्थादिति केचन ।**

तत्राद्य का कल्पना यतोऽपोढं यद्रहितं प्रत्यक्षमिष्यते । उच्यते—

**कल्पनां नाम जात्यादियोजनां प्रतिजानते ॥ ६ ॥**

योजना आरोपः । सा च जात्यादेः । गौरयमिति जातेर्योजना । दण्ड्ययमिति द्रव्यस्य । शुक्लोऽयमिति गुणस्य । गच्छत्ययमिति क्रियायाः । डित्थोऽयमिति शब्दस्य । प्रतिजानते न तु निरूपयितुमीशत इति ॥ ६ ॥

तदेतत् प्रत्यक्षलक्षणं नोपपद्यते । तदुच्यते—

**समारोपः किलैतावान् सदर्थालम्बनं च तत् ।**
**जात्याद्यपोहे वृत्तिः क्व क्व विशेषः कुतश्च सः ॥ ७ ॥**

किलेति परस्य सम्प्रतिपत्तौ । उपहासे वा । एतावानिति प्रत्यक्षमीक्ष्यमाणानामुच्चावचानां जातिद्रव्यगुणक्रियारूपाणां पदार्थानामतिमेधाविभिरप्यशक्यनिह्नवत्वाभिप्रायेण । सर्वोऽयं जात्यादिरूपोऽर्थः समारोपः किल आरोपमात्रसिद्धो हि भवतां मतः । किमतो यद्येवम् । उच्यते । प्रत्यक्षलक्षणानुपपत्तिः । पुरतो विद्यमानार्थविषयं हि तत् सर्वसंमतम् । भवदीया अपि ह्येवमाहुः—तस्य विषयः स्वलक्षणम् । यस्य सान्निधानासन्निधानाभ्यां ज्ञानप्रतिभासभेदः तत्स्वलक्षणम् । तदेव परमार्थसत्—इति । तस्य कथमर्थसामान्यसम्बन्धशून्यत्वं लक्षणं भवितुमर्हति ।

किञ्च यदि जात्यादयोऽर्था अपोह्यन्ते अपह्नूयन्ते क्व तर्हि प्रत्यक्ष-

विज्ञानस्य वृत्तिः । कस्मिंश्चिदर्थे वृत्तिर्हि ज्ञानस्य नियता। निर्विषयज्ञानाप्रसिद्धेः। जातिगुणक्रियाद्रव्यात्मा च सर्वो विषयो भवद्भिर्नेष्यते। तथा क्व विशेषः व्यावृत्तिश्च कुत्र भवेत्। सति हि प्रत्यक्षविषये घटत्ववति द्रव्ये तस्य घटत्वेन पटाद्यावृत्तिर्भवेत् । यदि तदेव नास्ति घटं पश्यामि न पटमिति प्रत्यक्षगम्यो विशेषः कुत्र भवेत् । अपि च घटज्ञानस्य पटज्ञानाद्विशेष एव कुतः। उभे अपि हि प्रत्यक्षे अर्थसामान्यशून्ये। तेन विषयकृतो विशेषस्तावन्नास्ति । न च केवलयोर्ज्ञानस्वरूपयोः स्वतो विशेषः कश्चित् सुवचः। सर्वविषयविरक्तत्वेनोभयोः स्वच्छत्वसाम्यात् । यद्वा क्व विशेषः विषयाभावे ज्ञानानां घटज्ञानं पटज्ञानमिति विशेषः किंकृतः । कुतश्च सः न हि विषयातिरिक्तः कोऽपि विशेषहेतुरस्तीति द्रष्टव्यम् ॥ ७ ॥

ननु यद्यपि भावरूपमर्थस्वरूपं किमपि नास्ति तथाऽपि अन्यापोहरूपं तदस्माकस्त्येव। उच्यते—

**तदपोहेषु च तथा सिद्धा सा बुद्धिगोचरा ।**
**अवस्तुकं चेद्वितथं प्रत्यक्षं तत्त्ववृत्ति हि ॥ ८ ॥**

जात्याद्यपोहेषु च तथा प्रत्यक्षवृत्त्यास्पदेषु, सा जातिर्बुद्धिगोचरा सती सिद्धा भवति । गुणादयश्च । गौरित्यत्र हि अगोव्यावृत्तिरपोह इत्युच्यते। अगोव्यावृत्तिश्च गोभिन्नभेदः। गौश्च गोत्ववती। तेनायमपोहो गोत्वमप्रतीत्य न प्रत्येतुं शक्यते। यदि च प्रतीयते प्रत्यक्षप्रमागोचरीकृतत्वादस्त्येव सा ; न तु नास्ति। अथ चेदुच्यते—वितथमयथार्थमिदं विज्ञानम्। अवस्तुकं निर्विषयकं हि तत् । न हि गोत्वं परमार्थसत् । तच्चेदं विषयीकरोति । तस्मादवस्तुकं वितथम्। न च वितथः प्रत्ययो वस्तुसाधनायालमिति— तन्न। तत्त्ववृत्ति यथार्थविषयं हि भवतामपि प्रत्यक्षम् । प्रमाणस्य हि भवद्भिरपि विभागः क्रियते प्रत्यक्षमनुमानमिति। तस्य कथमिदानीं वैतथ्यमुच्येत ॥ ८ ॥

स्यादेतत् । वस्त्वभावेऽपि एका ज्ञानस्य व्यक्तिर्ग्राहिका अपरा ग्राह्या । गोत्वेन गोचरीभवन्तीमिमां ग्राहिका गृह्णाति गौरिति । तदुपपन्नं विज्ञानम् । न चार्थाभ्युपगम इति । अत्रोच्यते—

ग्राह्यग्राहकभेदेन विज्ञानांशो मतो यदि ।
विज्ञानमात्रसादृश्याद्विशेषोऽस्य विकल्पना ॥ ९ ॥

कश्चिदंशः काचिद्व्यक्तिः ग्राह्यः अपरो ग्राहक इति भेदवान् विज्ञानांशो मतो यदि तदप्ययुक्तम् । विषयसामान्यविनिर्मुक्तं विज्ञानं सर्वमपि हि तुल्यस्वरूपं सर्वात्मनाऽविशिष्टं भवति । तथा सति कथमेकं विज्ञानं गौरिति भासेत अपरं अश्व इति । असत्यप्येवं विशेषहेतौ यदि विशेषावभास इष्यते तर्हि स विशेषः विकल्पना आरोपमात्रसिद्धः न वास्तवः । अस्त्विति चेत् उक्तमुत्तरं 'प्रत्यक्षं तत्त्ववृत्ति हि' इति ॥ ९ ॥

एवं प्रथमं प्रत्यक्षलक्षणं विमृष्टम् । अथाद्य द्वितीयमुपादाय व्याचष्टे—

अर्थादेवेति रूपादेस्तत एवेति नान्यतः ।

ततोऽर्थाद् यद् भवति तत् प्रत्यक्षमिति पूर्वं वासुबन्धवं लक्षणमुक्तम् । तत्र 'तत एव' 'अर्थादेव' इत्यवधारणं द्रष्टव्यम् । यदाहुः असति बाधके सर्वं वाक्यं सावधारणमिति । तत्र अर्थो रूपादिगुणसमुदायः । अस्मादेव यद्भवति (न तु अपारमार्थिकात् मरीचिकाम्भोगुणात्) तत् प्रत्यक्षम् । तथा तत एव नान्यतः यत्पदार्थविषयं ज्ञानमुच्यते तस्मादेव पदार्थात् नान्यस्मात् पदार्थात् यत् ज्ञानं भवति तत् प्रत्यक्षम् ।

इति तावदुक्तविवरणम् । ततः तत एवेति व्यावर्तितस्यान्यस्मात् पदार्थादुत्पन्नस्य प्रत्यक्षाभासस्य उदाहरणमुच्यते—

अन्यथा घटविज्ञानमन्येन व्यपदिश्यते ॥ १० ॥

घटज्ञानमिति तावत् किञ्चिद् ज्ञानं घटेन व्यपदिश्यते प्रतिपाद्यते । न च तद्घटाज्जातम् । किं तर्हि । अन्यथा अन्यस्मात् घटभिन्नाद्वस्त्वन्तरात् । किं पुनस्तद्वस्त्वन्तरम् । रूपादिकमेव । कुतस्तु खलु घटादेव तस्योत्पत्तिर्नेष्यते । घटस्याभावात् । तदेतदुपपादयन्ति–
"रूपादिपरमाणव एव निरन्तरोत्पादाः परमार्थसन्तो भिन्नाः स्वविज्ञानस्याविकल्पस्य जनकाः । तेषां तु नानात्वं स्वेन रूपेण संवृण्वती निर्विकल्पकपृष्ठभाविनी घट इति विकल्पिका बुद्धिस्तानेव रूपादीनेकोदकाहरणादिक्रियाकारिणोऽभेदिन इव दर्शयन्ती संवृतिरित्युच्यते" इति तदेवं घटविज्ञानं अन्यथा भवति ; अन्येन च व्यपदिश्यते । तद्वारणाय तत एवार्थाद्यद् भवति तत्प्रत्यक्षमित्युक्तमिति ।

अस्य प्रत्यक्षलक्षणस्य निराकृतिरिह न दृश्यते । ग्रन्थस्त्रुटितः स्यात् । यद्वा पूर्वेणैव एतदपि निराकृतं मन्यते । तत्त्ववृत्तिना प्रत्यक्षेण गोचरीक्रियमाणो घटः कथमपह्नूयेत । अदृष्टाननुमिता रूपादिपरमाणवश्च कथं सन्तीति प्रतिज्ञायेरन् । तेन घटादेव जायते घटज्ञानमिति तस्य प्रत्यक्षत्वान्न तद्वारणाय तत इत्यपेक्षितमिति । अधिकं न्यायवार्तिकादौ ॥ १० ॥

अथानुमानम् । तत्र नैयायिकप्रभृतयस्तावत्–

त्रिरूपाल्लिङ्गतो ज्ञानमनुमानं च केचन ।

विदुः । चेति प्रत्यक्षसमुच्चये । त्वर्थः सन् विषयान्तरप्रस्तावे वा । त्रीणि रूपाणि पक्षसपक्षविपक्षसत्त्वासत्त्वानि वक्ष्यन्ते ।

दिङ्नागप्रभृतयस्तु—

तद्विदो नान्तरीयार्थदर्शनं चापरे विदुः ॥ ११ ॥

अत्र औद्योतकरं वचः— अपरे तु ब्रुवते नान्तरीयकार्थदर्शनं तद्विदोऽनुमानमिति । योऽर्थो यमर्थमन्तरेण न भवति स नान्तरीयकः नान्त-

रीयकश्चासावर्थश्चेति नान्तरीयकार्थः तस्य दर्शनं तद्विदोऽनुमानं यस्तं वेद तन्नान्तरीयकोऽयमिति—इति ।

तद्विदः तद्वेदिनः पुरुषस्य । अस्यैव विवरणं यस्तमित्यादि । यः पुरुषः तं व्यापकं वह्न्यादिरूपमर्थं जानाति अयं धूमो वह्निनान्तरीयकः धूमव्यापको वह्निरिति स तद्विदिति ।

यद्यप्युद्योतकरोक्तरीत्या तद्विदर्थपदयोरिह वैयर्थ्यं तथापि नातीव स दोष इति ग्रन्थकारस्य न तद्दूषणे प्रवृत्तिः । न हि प्रत्यक्षलक्षणवेद-तत् वाह्यार्थापह्नवादिकं अवश्यनिराकार्यं किञ्चन गर्भीकरोतीति ॥ ११ ॥

परार्थानुमाने लिङ्गादपि प्राग्भावितया प्रतिज्ञां तावदादौ निरूपयति—

**विवादास्पदधर्मेण धर्मी कृतविशेषणः ।**
**पक्षस्तस्य च निर्देशः प्रतिज्ञेत्यभिधीयते ॥ १२ ॥**

अस्तीति कश्चित् । नास्तीत्यपर ; एवं विवादगोचरीभूतेन धर्मेण विशेषितो धर्मी पक्ष इत्युच्यते । तस्य निर्देशः शब्देन प्रतिपादनं प्रतिज्ञेत्यभिधीयते । यथा शब्दस्य नित्यत्वमस्तीति मीमांसकाः, नास्तीति नैयायिकादयः । एवं विवादविषयीभूतो धर्मो नित्यत्वम् । तेन विशेषितः शब्दो मीमांसकानां पक्षः । तस्य 'शब्दो नित्यः' इति शब्देन प्रतिपादनं प्रतिज्ञेति ॥ १२ ॥

अत्रैव प्रतिज्ञाहीनं काव्यदोषं प्रतिपादयन् प्रतिज्ञादोषानाह—

**तदर्थहेतुसिद्धान्तसर्वागमविरोधिनी ।**
**प्रसिद्धधर्मा प्रत्यक्षबाधिनी चेति दुष्यति ॥ १३ ॥**

तदर्थादीन्विरुणद्धीति तदर्थादिविरोधिनी । इत्येवंप्रकारैः सा प्रतिज्ञा दुष्यतीति योज्यम् ॥ १३ ॥

तदर्थविरोधिनोल्यंतद्विवृण्वन्नेवोदाहरति—

**तथैव हि तदर्थस्य विरोधकरणं यथा ।**
**यतिर्मम पिता बाल्यात् सूनुर्यस्याहमौरसः ॥ १४ ॥**

तथैव प्रतिज्ञया तस्या एव प्रतिज्ञायाः अर्थस्य विरोधस्य करणम् । बाल्यात्प्रभृति यतेरनालम्बितगार्हस्थ्यस्य नायमौरसपुत्रो भवितुमर्हतीति विरोधः ॥ १४ ॥

अथ हेतुविरोधिनी—

**अस्त्यात्मा प्रकृतिर्वेति ज्ञेया हेत्वपबाधिनी ।**
**धर्मिणोऽस्याप्रसिद्धत्वात् तद्धर्मोऽपि न सेत्स्यति ॥ १५ ॥**

अस्त्यात्मेति वा अस्ति प्रकृतिरिति वा यदि सांख्यः कश्चित् बौद्धं प्रति प्रतिज्ञां कुर्यात् सा हेतुविरोधिनी । कथम् । बौद्धस्य प्रतिवादिनः अत्र पक्षभूतो धर्मी आत्माऽप्रसिद्धः । तथा प्रकृतिरपि । एवं पक्षस्याप्रसिद्धौ पक्षधर्मभूतो हेतुरपि न सेत्स्यतीति ॥ १५ ॥

प्रतीतिवैशद्याय एतद्दोषरहितां प्रतिज्ञां दर्शयति—

**शाश्वतोऽशाश्वतो वेति प्रसिद्धे धर्मिणि ध्वनौ ।**
**जायते भेदविषयो विवादो वादिनोर्मिथः ॥ १६ ॥**

शब्दरूपे धर्मिणि प्रसिद्धे नित्योऽनित्यो वेति तद्धर्मविषयो वादिनोर्मिथो विवादो जायते । तत्र शब्दो नित्य इति वादिनो वा शब्दोऽनित्य इति प्रतिवादिनो वा प्रतिज्ञा न पूर्ववद्धेतुविरोधिनी भवति । धर्मिण उभयत्र प्रसिद्धत्वात् । भिद्यते येन धर्मी स भेदः धर्म इत्यर्थः ॥ १६ ॥

अथ सिद्धान्तविरोधिनी—

**स्वसिद्धान्तविरोधित्वाद्विज्ञेया तद्विरोधिनी ।**
**कणभक्षो यथा शब्दमाचक्षीताविनश्वरम् ॥ १७ ॥**

यः प्रतिज्ञां प्रयुङ्क्ते तस्यैव सिद्धान्तं यदि सा विरुणद्धि तर्हि सा सिद्धान्तविरोधिनी ज्ञेया । यथा कणादस्य शब्दोऽविनाशीति प्रतिज्ञा भवति चेत् । तस्य हि शब्दो विनश्वर एवेति सिद्धान्तः ॥ एतच्छेषतयाऽपि पूर्वश्लो-

क्को योजयितुं शक्येत । विवादो वादिनोर्मिथो जायते । तत्र स्वसिद्धान्तविरोधित्वे तद्विरोधिनीति । पूर्वैव तु योजना साधीयसी ॥ १७ ॥

अथ सर्वागमविरोधिनी—

**सर्वशास्त्रविरुद्धत्वात् सर्वागमविरोधिनी ।**
**यथा शुचिस्तनुस्त्रीणि प्रमाणानि न सन्ति वा ॥ १८ ॥**

अशुचिस्तनुरिति सर्वत्र प्रसिद्धम् । आहुश्च सर्वाशुचिनिधानस्येति । तद्विरोधिनीयं शुचिस्तनुरिति प्रतिज्ञा । यदि तु तपोयोगबलाध्मातसर्वमलस्य पुरुषधौरेयस्य कस्यचित् भवत्येव शुचिस्तनुरिति सम्भाव्यते तर्हि उदाहरणानन्तरं दीयते त्रीणि प्रमाणानीति । प्रत्यक्षमेकं चार्वाका इच्छान्ति । तच्चानुमानं चेति द्वे सौगतवैशेषिकादयः । ते च शब्दोपमाने चेति चत्वारि नैयायिकाः । तानि चार्थापत्तिश्चेति पञ्च प्राभाकराः । तानि चानुपलब्धिश्चेति षट् कौमारिलाः । न तु त्रीणि कैश्चिदपीति सर्वागमविरोधिन्येषा प्रतिज्ञा । अथापि यदि केषांचित् त्रीण्येव प्रमाणानि—यथा योगानाम् ; 'प्रत्यक्षानुमानागमाः प्रमाणानि' इति हि भगवान् पतञ्जलिः ; केषांच्चिद्वेदान्तिनां च; यथाऽऽह भगवान् वेङ्कटनाथगुरुः ........ मनुश्च । प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ इति—तदाऽप्युदाहरणान्तरं दीयते प्रमाणानि न सन्तीति । न हि प्रमाणसामान्यमनङ्गीकृत्य यत्किमपि शास्त्रं प्रवर्तते । तेनेयं सर्वशास्त्रविरोधिनीति ॥ १८ ॥

अथ प्रसिद्धधर्मा—

**आकुमारमसन्दिग्धधर्माहितविशेषणा ।**
**प्रसिद्धधर्मेति मता श्रोत्रग्राह्यो ध्वनिर्यथा ॥ १९ ॥**

सन्दिग्धार्थनिर्णयाय हि अनुमानप्रवृत्तिः । यदाहुः साध्यसंशयः पक्षतेति । तत्र आबालगोपालप्रसिद्धार्थप्रतिज्ञा निष्फलत्वात् दुष्यति । शब्दस्य श्रोत्रग्राह्यत्वं च सर्वजनप्रसिद्धम् ॥ १९ ॥

अथ प्रत्यक्षबाधोनी—

प्रत्यक्षबाधिनी तेन प्रमाणेनैव बाध्यते ।
यथा शीतोऽनलो नास्ति रूपमुष्णः क्षपाकरः ॥ २० ॥

प्रत्यक्षं बाधत इति वा प्रत्यक्षेण बाध्यत इति वा न कश्चिद्विशेष इति द्रष्टव्यम् । अग्निः शीतलः शुक्लनीलादिरूपं नास्ति चन्द्र उष्ण इतीमास्तिस्रोऽपि प्रतिज्ञाः प्रत्यक्षबाधिन्यः । अत्राद्यं न्यायवार्तिके 'अश्रावणः शब्दः, इति सौगतोक्तमुदाहरणं दूषयता उद्योतकरेण दत्तमुदाहरणम् । द्वितीयं ग्रन्थकारस्य स्वकीयं शास्त्रीयमुदाहरणम् । अन्त्यं लौकिकम् ॥ २०॥

एवं प्रथमभाविनी प्रतिज्ञा प्रतिपादिता । अथ हेतुः यः 'त्रिरूपा लिङ्गतः' इति पूर्वमुक्तः ।

सन् द्वयोः सदृशे सिद्धो व्यावृत्तस्तद्विपक्षतः ।
हेतुस्त्रिलक्षणो ज्ञेयो हेत्वाभासो विपर्ययात् ॥ २१॥

द्वयोः सत्त्वम् , सदृशे सिद्धत्वम् , प्रकृतसाध्यस्य यो विपक्षस्तस्मात् व्यावृत्तत्वं इति त्रीणि लक्षणानि रूपाणि लिङ्गापरपर्यायस्य हेतोः । यदि विपर्ययः एषु त्रिषु रूपेष्वेकस्यापि हानिः भवति तर्हि न हेतुः अपि तु हेत्वाभासः हेतुवदाभासमानः । एवंविधदुष्टहेतुमदेव हेतुहीनं ज्ञातव्यम् ॥ २१ ॥

ननु किं द्वयोः सत्त्वं नाम । उच्यते—

सन् द्वयोरिति यः सिद्धः स्वपक्षपरपक्षयोः ।

यः स्वपक्षपरपक्षयोरुभयोरपि विद्यमानत्वेनाभ्युपगतः तादृश इति 'सन् द्वयोः, इत्यनेनोच्यते इति ।

ननु शब्दो नित्योऽनित्यो वेति विवादे नित्यत्वेनानित्यत्वेन वा विशेषितः शब्द एक एव वादिप्रतिवादिनोरुभयोरपि पक्षः । तत् कथं द्वौ पक्षौ। उच्यते—

अभिन्नलक्षणः पक्षः फलभेदादयं द्विधा । २२ ।

सत्यमेको धर्मी । विशेषणभूतधर्मभेदमादाय तु विशिष्टभेद इहोच्यते ; नित्यत्वविशिष्टः शब्द एकस्य वादिनः पक्षः अनित्यत्वविशिष्टः शब्दोऽपरस्य । तद्युक्तं द्वयोः स्वपक्षपरपक्षयोरिति ॥ २२ ॥

ननु स्तामेवं द्वौ पक्षौ । तथापि द्वयोर्युगपदुपादाने को निर्बन्धः । यः प्रथमं प्रतिजानानः स्वपक्षपरिग्रहं करोति तदीये तस्मिन् पक्षे स हेतुरस्ति न वेत्येतावन्मात्रं हि विचार्यम् । किं पक्षान्तरे तस्य सदसद्भावचिन्तया । अत्रोच्यते—

परपक्षानुपादाने तद्वृत्तेश्चानुदाहृतौ ।
कथमन्यतरासिद्धहेत्वाभासव्यवस्थितिः ॥ २३ ॥

अस्ति तावदन्यतरासिद्धो नाम हेत्वाभासः । यथाऽऽह वैशेषिकभाष्यकारः, 'तत्रासिद्धश्चतुर्विधः । उभयासिद्धोऽन्यतरासिद्धस्तद्भावासिद्धोऽनुमेयासिद्धश्चेति' इति । तत्रभवान् मीमांसावार्तिककारश्च

दर्शनादिकदेशस्येत्यनेनैतद्व्युदस्यते ।
यत्रैकस्योभयोर्वाऽपि संशयाधीविपर्ययाः ॥
कृतकत्वगुणत्वादौ परोक्ते याज्ञिकं प्रति ।
स्वोक्ते चैवंप्रकारे स्यादसिद्धोऽन्यतरस्य तु ॥ इति ।

व्याख्याता पार्थसारथिश्च— दर्शनादिति । वादिप्रतिवादिनोरेकस्य द्वयोर्वा संशयाज्ञानविपर्यया यस्मिन् सोऽनिश्चितत्वादसिद्धोऽनेन व्युदस्यते । .... .... कृतकत्वेति । शब्दानित्यत्वे हि यदेव(!) मीमांसकं प्रति वैशेषिकादिभिः कृतकत्वगुणत्वादिकं हेतुत्वेनोच्यमानं प्रतिवादिनोऽसिद्धम् ; तदेव मीमांसकेनोच्यमानं वाद्यसिद्धमिति- इति ।

यदि वादिना कृतायां प्रतिज्ञायां परपक्षो नोपादेयः हेतोश्च तत्र वृत्तिर्नोदाहार्या कथमेवमन्यतरासिद्धहेत्वाभासाभ्युपगमः प्रामाणिकानाम् । उभयत्र सिद्ध्यपेक्षासत्त्वे हि अन्यतरासिद्धिर्दोषो भवेत् । तस्माद्युक्तमुक्तं सन्द्वयोरिति ॥ २३ ॥

अथ 'सदृशे सिद्धः' इति कोऽर्थः । उच्यते--

**साध्यधर्मानुगमतः सदृशस्तत्र यश्च सन् ।**

साध्यधर्मः पर्वतो वह्निमानित्यादौ वह्निः तस्यानुगमः सद्भावः तेन महानसादिः पर्वतादेः पक्षस्य सदृशो भवति । एवं सदृशे सपक्षे महानसादौ च यः सन् विद्यमानः सः सदृशे सिद्ध इत्युच्यत इति ।

ननु यः पक्षे सन् भवति स कथं सपक्षेऽपि सन् भवेत् । न खल्वेक एव धूमः पर्वते महानसे च वर्तेत । अन्या हि धूमव्यक्तिः पर्वते वर्तते अन्या च महानसे । तत् कथमेकस्यैव 'सन् द्वयोः सदृशे सिद्धः' इति पक्षसपक्षोभयवृत्तित्वमुच्यते । अत्राभिधीयते—

**अन्योऽप्यसावेक इव सामान्यादुपचर्यते ॥ २४ ॥**

सत्यमस्ति व्यक्तिभेदः तथाप्यभिन्नवदुपचारः क्रियते । कथम् । साजात्यात् । पर्वतवृत्तिरपि हि धूमत्वजातियोगी महानसवृत्तिरपि । तेन युक्तं व्यवहर्तुं धूम उभयत्र सन्निति । तदेतत् 'उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः' इति हेतुसूत्रव्याख्याने न्यायवार्तिककारेणोक्तम् । अयं तत्रत्यो ग्रन्थः—

उदाहरणेन साधर्म्यं उदाहरणसाधर्म्यम् । किं पुनरुदाहरणम् । वक्ष्यमाणकम् (रूपम् ?) । तेन साधर्म्यं समानधर्मता । यो धर्मः साध्ये भवति तथाभूत एवोदाहरणेऽपीति । न पुनः स एव । अन्यधर्मस्यान्यत्रावृत्तेः । न ह्यन्यस्य धर्मोऽन्यत्र वर्तते । किं तु तत्तुल्यः स एवेत्युच्यत— इति ॥ २४ ॥

अथ 'व्यावृत्तस्तद्विपक्षतः' इत्युक्तं विविच्यते—

**विपक्षस्तद्विसदृशो व्यावृत्तस्तत्र यो ह्यसन् ।**

यः तस्य पक्षस्य पर्वतादेः विसदृशः साध्यवह्निरहितत्वेन असदृशः ह्रदादिः स विपक्षः तत्र यो न सन् सः विपक्षव्यावृत्त इत्युच्यते ।

हेतुप्रकरणमुपसंहरन्नाह—

**इति द्वयैकानुगतिव्यावृत्तिर्लक्ष्मसाधुता ॥ २५ ॥**

इति उक्तविधा या द्व्यैकानुगतिव्यावृत्तिः द्व्यं पक्षः सपक्षश्च एकः विपक्षः द्व्यं च एकश्च द्व्यैकौ अनुगतिसहिता व्यावृत्तिः अनुगतिव्यावृत्तिः द्व्यैकयोरनुगतिव्यावृत्तिः सा लक्ष्मसाधुता लक्ष्मणः हेतुलक्षणस्य साधुत्वप्रयोजिका । तत्प्रयोजके तच्छब्दः । 'व्यावृत्तेर्लक्ष्मसाधुता' इति वा पठनीयम् । पाठान्तरं वा समञ्जसतरमिहान्वेष्टव्यम् ॥ २५ ॥

अथ दृष्टान्तहीनम् । तत्र दृष्टान्तस्तावत् द्विविधः—

**साध्यसाधनधर्माभ्यां सिद्धो दृष्टान्त उच्यते।**
**तद्विपर्ययतो वाऽपि**

पर्वतो वह्निमानित्यादौ वह्निविशिष्टः पर्वतादिः साध्यः । तत्र साध्यधर्मीति पर्वतादेः, साध्यधर्म इति वह्न्यादेश्च प्राचां व्यवहारः । साधनधर्मो धूमादिः । आभ्यां साध्यसाधनरूपाभ्यां वह्निधूमाद्यात्मकधर्माभ्यां तद्वत्त्वेनेत्यर्थः सिद्धः निश्चितः महानसादिः दृष्टान्त उच्यते । अयमेकः साधर्म्यदृष्टान्तः । अन्यस्तु वैधर्म्यदृष्टान्तः । स उच्यते तद्विपर्ययतो वाऽपीति । साध्यसाधनधर्मवत्तया सिद्धः पूर्वमुक्तः । तद्वैपरीत्येन साध्यसाधनधर्मशून्यत्वेन सिद्धो ह्रदादिरपि दृष्टान्त उच्यत इति ।

**तदाभस्तदवृत्तितः ॥ २६ ॥**

दृष्टान्तत्वेन निर्दिष्टे यस्मिन् साध्यधर्मस्य साधनधर्मस्य वा न वृत्तिः स तदाभः दृष्टान्ताभासः । एतादृशदृष्टान्ताभासयुक्तं दृष्टान्तहीनमित्यर्थात् सिद्ध्यति ॥

दृष्टान्तस्यैव लक्षणान्तरम्—

**साध्येन लिङ्गानुगतिस्तदभावे च नास्तिता ।**
**ख्याप्यते येन दृष्टान्तः स किलान्यैर्द्विधोच्यते ॥ २७ ॥**

यत्र हेतोः साध्यनिरूपिता अन्वयरूपा व्याप्तिर्गृह्यते यत्र हेतुरस्ति तत्र साध्यमप्यस्तीति, स एको दृष्टान्तः । यत्र तु साध्याभावे हेतोर्नास्तिता व्यतिरेको गृह्यते सोऽन्यो दृष्टान्त इत्येवंविधो द्वेधा दृष्टान्त इत्यन्यैरुच्यते ।

क्लिेत्यनास्थायाम् । परं प्रति प्रयोगकाले साध्यसाधनवत्तया सिद्धत्वमेव दृष्टान्तस्यापेक्षणीयम् । न व्याप्तिग्राहकत्वमपीति ॥ २७ ॥

'प्रतिज्ञाहेतुदृष्टान्तहीनम्' इति यदुद्दिष्टं तन्निरूपणप्रवृत्तेन एवं प्रतिज्ञाहेतुदृष्टान्ताः साभासाः प्रदर्शिताः । अथेदानीमनुमानप्रकरण-कात्स्न्र्याय अनुमानदूषणमपि संगृह्य प्रतिपादयति—

**दूषणं न्यूनताद्युक्तिर्न्यूनं हेत्वादिनाऽथ च**
**तन्मूलत्वात् कथायाश्च न्यूनं नेष्टं प्रतिज्ञया ॥ २८ ॥**

अत्र प्रतिज्ञातेऽर्थे हेतुर्नास्ति ; दृष्टान्तो नास्ति , सन्नापि वा आभासरूप इत्यादिवचनं दूषणं ज्ञेयम् । ननु यथा हेतुन्यूनत्वदृष्टान्तन्यूनत्वाद्यभिधानं दूषणं तथा प्रतिज्ञान्यूनत्वाभिधानमपि किं न भवति । भवत्विति चेत् कथं 'न्यूनं हेत्वादिना' इत्युच्यते । 'प्रतिज्ञादिना' इति हि वाच्यम् । अत्राह तन्मूलत्वादिति । हेत्वादिनैव न्यूनत्वमिष्यते न प्रतिज्ञयाऽपि । प्रतिज्ञामूला हि वादस्य प्रवृत्तिः । तस्या अभावे तया न्यूनत्वं कस्या-न्यस्योच्येत । प्रतिज्ञानन्तरं तु तस्या हेत्वादिन्यूनत्वं सुवचम् । तस्मात् प्रतिज्ञया न्यूनं नेष्टमिति ॥ २८ ॥

यथा प्रतिज्ञाहेतुदृष्टान्तानां तत्तदङ्गवैकल्यादाभासा भवन्ति तद्वद्दूषणा-नामपि । तानाह—

**जातयो दूषणाभासास्ताः साधर्म्यसमादयः ।**
**तासां प्रपञ्चो बहुधा भूयस्त्वादिह नोदितः ॥ २९ ॥**

वस्तुतोऽदूषणानि दूषणवदाभासन्त इति दूषणाभासाः । तेषां जातिरिति संज्ञा । सेयं साधर्म्यसमा, वैधर्म्यसमा, इत्यादिभेदात् चतुर्विंशतिविधेति न्यायदर्शने पञ्चमाध्याये प्रथमाह्निके विस्तरः ॥ २९ ॥

एवं हेतुन्यायलवोच्चयोऽकारि । अथास्य काव्येषूपयोगः प्रदर्शनीयः। तत्रैतदादौ विवेक्तव्यम्—एवंविध एक एव न हेतुन्यायः काव्येषु । कि-

न्त्वन्यादृशोऽपि । स वक्ष्यते । शास्त्रगर्भत्वेन अन्यादृशत्वेन च द्विविधेषु काव्येषु अत्रराशौ निरूपितस्य शास्त्रीयस्य हेतुन्यायस्योपयोगः । द्वितीयराशौ वक्ष्यमाणविधस्य हेतुन्यायस्य--इति । तदेतदाह—

**अपरं वक्ष्यते न्यायलक्षणं काव्यसंश्रयम् ।**
**इदं तु शास्त्रगर्भेषु काव्येष्वभिहितं यथा ॥ ३० ॥**

न्यायस्य प्रतिज्ञादिघटितपरार्थानुमानात्मनः लक्षणं स्वरूपम् । इदं इयता प्रबन्धेन निरूपितम् । काव्येषु काव्यान्युद्दिश्य ॥ ३० ॥

यथा—

**अथ नित्याविनाभावि दृष्टं जगति कारणम् ।**

अविनाभावि नियतम् ।

कोऽत्र न्यायविज्ञानस्योपयोगः । उच्यते—

**कारणं चेन्न तन्नित्यं नित्यं चेत् कारणं न तत् ॥ ३१ ॥**

उक्ता तावत् प्रतिज्ञा दोषवती । न हि नित्यमुत्पद्यते । कारणं चोत्पादकम् । न चानुत्पद्यमानस्य उत्पादककारणसम्बन्धोऽस्ति । तत्र कुतस्तरामविनाभाव इति । सेयं 'यतिर्मम पिता बाल्यात्सूनुर्यस्याहमौरसः' इतिवत् तदर्थविरोधिनी प्रतिज्ञा । न च न्यायतत्त्वानभिज्ञस्य परकीयेष्वेवंविधेषु काव्येषु स्थितस्य दोषस्योद्भावनं स्वकीयेषु वर्जनं च सुशकमिति काव्ये न्यायविज्ञानोपयोगः ॥ ३१ ॥

अथ 'अपरं वक्ष्यते' इति प्रतिज्ञातं काव्यैकसंश्रयन्यायस्वरूपं वक्ष्यन् शास्त्रीयन्यायस्वरूपप्रतिपादनमुपसंहरति—

**लक्ष्म प्रयोगदोषाणां भेदेनानेन वर्त्मना ।**
**सन्धादिसाधनासिद्ध्यै शास्त्रेषूदितमन्यथा ॥ ३२ ॥**

प्रतिज्ञाहेतुदृष्टान्तसमुदायात्मनो न्यायस्य प्रयोगे ये दोषाः सम्भवन्ति तेषां लक्ष्म लक्षणं प्रदर्शितया रीत्या अन्यथा वक्ष्यमाणवैलक्षण्येन शास्त्रेषु उक्तम् ।

कस्मै प्रयोजनाय। सन्धादिसाधनासिद्ध्यै। सन्धा प्रतिज्ञा आदिर्यस्याः तादृशी या साधना साध्यतेऽनया तत्त्वार्थ इति साधना प्रतिज्ञादिसमुदायात्मा न्यायः तस्याः सिद्ध्यै सुव्युत्पत्त्यै । प्रमेयं प्रति विवादे जाते परार्थानुमानरूपन्यायप्रयोगेण हि तत्सिद्धिर्भवति । तत्र सम्भावितदोषापरिज्ञाने कथं समीची साधना प्रयुज्येत । असमीचो वा परप्रयुक्ता दूष्येत । तदेतत्प्रयोजनाय प्रयोगदोषलक्षणं शास्त्रेष्वन्यथा प्रतिपादितम् ॥ ३२ ॥

अथ च—

**तज्ज्ञैः काव्यप्रयोगेषु तत्प्रादुष्कृतमन्यथा ।**

न्यायशास्त्राभिज्ञैः काव्यविद्भिः काव्यव्यवहारेषु प्रयोगदोषलक्षणं शास्त्रवैलक्षण्येन प्रतिपादितम् ।

कः खलु काव्यशास्त्रयोर्भेदः येन प्रतिज्ञादिप्रयोगदोषवैलक्षण्यं भवति । उच्यते—

**तत्र लोकाश्रयं काव्यमागमास्तत्त्वदर्शिनः ॥ ३३ ॥**

तत्र शास्त्रकाव्ययोर्मध्ये । लोक इह लोकव्यवहारे स्थितोऽर्थः । तमेवाश्रित्य काव्यं प्रवर्तते । चमत्कारप्रधानं हीदम् । तत्र लोकव्यवहारमतिक्रम्य अर्थान्तरोपनिवन्धे न तच्चमत्काराय कल्पेत । तस्मात् तात्त्विकमतात्त्विकं वा पदार्थजातं यथालोकसिद्धमादायास्य प्रवृत्तिः । सांसारिकसर्वदुःखोच्छेदोपायप्रदर्शनतात्पर्येण प्रवृत्तं शास्त्रं तु तत्त्वैकाभिनिवेशि । विभ्रान्तिमूलो हि भवः । तन्निवर्तनमेव तस्य कार्यम् । तत्र का प्रसक्तिर्भ्रान्तिसिद्धवस्तूपादानस्य । तदेवमुद्देश्यभेदात् तदानुगुण्येन प्रयोगतद्दोषादिभेद इति ॥ ३३ ॥

यदुक्तं भ्रान्तिसिद्धोऽप्यर्थो लोकव्यवहारे दृश्यते, शास्त्रं तु तत्र तत्त्वं दर्शयतीति ; तत्र किञ्चिन्निदर्शनम्—

असिसङ्काशमाकाशं शब्दो दूरानुपात्ययम् ।
सदैव वारि सिन्धूनामहो स्थेमा महार्चिषः ॥
रूपादीनां यथाद्रव्यमाश्रयो नश्यतीति च ॥ ३४ ॥

आकाशस्य रूपं, शब्दस्य क्रिया, सिन्धूनां जलस्य सदातनत्वं, अर्चिषः स्थैर्यं च लोके तदनुकारिणि काव्ये च व्यवह्रियमाणं दृश्यते । आगमास्त्वत्र तत्त्वमन्यथैव दर्शयन्ति । कथम् । उच्यते । रूपादीनां यथाद्रव्यमाश्रयः । कर्तरीयं षष्ठी । आद्यर्थः क्रिया । आश्रयो वृत्तिः । रूपक्रियादि स्वस्वकारणद्रव्यमनतिक्रम्यैव वर्तेत । चक्षुषा गृह्यमाणं सर्वं रूपं कारणगुणपूर्वकमेव पृथिव्यादौ दृष्टम् । न च रूपवदवयवारब्धमाकाशम् । तेन तस्य नीरूपत्वं तात्त्विकम् । रूपिताप्रतीतिस्तु भ्रान्तिः । नश्यतीति । ग्रीष्मे सरितां वारिणः शोषात् तदानीमपि तत्र तत् सदिव कृत्वा कवीनां वर्णनं अन्यथाप्रतिपत्तिकृतम् । तथा दीपकाष्ठादिषु स्फुरन्ती अग्निज्वाला नैका । स्वाश्रयभूतस्य वर्तिकाकाष्ठादिसम्बन्धिनोऽवयवस्य नाशे सति तदाश्रिताया ज्वालाया अपि नाशावश्यंभावेन अवयवान्तराश्रिताया ज्वालायास्ततो भेदस्य दुर्निवारत्वात् । तदेवं महतोऽप्यर्चिषोऽवयवनाशापादितविनाशस्य क्षणभंगुरत्वे स्थिते स्थेम्नो वर्णनमापातप्रतीतिमात्रनिबन्धनमिति । '....स्थेमा महार्चिषः इति , .... नश्यतीति च, लोकाश्रयं काव्यम् , आगमास्तत्त्वदर्शिनः' इति पूर्वेण योज्यम् । 'तदेव वापीसिन्धूनामहो स्थेमा....' इति यत् पठ्येत तत्र 'अहो' स्थाने 'अम्भः' इति कृत्वा 'तदेव एकरूपमेव' इति व्याख्येयम् । 'नश्वरीति या' इति च पठ्यमानमनुपपन्नम् । अत्र 'नश्यतीति' इत्येतावन्मात्रं क्वचिल्लिखितकोशे स्थितमेवोपलब्धम् ॥ ३४ ॥

अथास्मिन् काव्यसंश्रये न्याये प्रतिज्ञा तावदुच्यते—

इष्टकार्याभ्युपगमं प्रतिज्ञां प्रतिजानते ।
धर्मार्थकामकोपानां संश्रयात् सा चतुर्विधा ॥ ३५ ॥

स्वस्य परस्य वा इष्टं यत्किञ्चित् कार्यं तस्य इदमहं करिष्यामीति सङ्कल्पः प्रतिज्ञेति लक्षणम् । निमित्तभेदात् सा चतुर्विधा । धर्मार्थकामकोपाश्चत्वारि निमित्तानि । तेन धर्मनिमित्ताऽर्थनिमित्ता कामनिमित्ता कोपनिमित्तेति तस्याश्चातुर्विध्यमिति विभागः ॥ ३५ ॥

अथोदाहरणानि । तत्र धर्मनिमित्ता–

जरामेष विभर्मीति प्रतिज्ञाय पितुर्यथा ।
तथैव पुरुणाऽभारि सा स्याद्धर्मनिबन्धनी ॥ ३६ ॥

'पितृदेवो भव' इति विहितधर्मपरिपालनमात्रं ह्यत्र निमित्तमिति ॥ ३६ ॥

अर्थनिमित्ता यथा—

उपलप्स्ये स्वयं सीतामिति भर्तृनिदेशतः ।
हनूमता प्रतिज्ञाय सा ज्ञातेत्यर्थसंश्रया ॥ ३७ ॥

भर्ता सुग्रीवः । भर्तुः राज्यप्रतिष्ठार्थत्वादत्र अर्थनिमित्तता । सीतैव वा इहार्थत्वेनाभिमता ॥ ३७ ॥

कामनिमित्ता यथा——

आहरिष्याम्यमूमद्य महासेनात्मजामिति ।
कृत्वा प्रतिज्ञां वत्सेन हृतेति मदनाश्रया ॥ ३८ ॥

कथासरित्सागरे इयं कथा ॥ ३८ ॥

अथ कोपनिमित्ता—

भ्रातुर्भ्रातृव्यमुन्मथ्य पास्यास्यस्यासृगाहवे ।
प्रतिज्ञाय यथा भीमस्तच्चकारावशो रुषा ॥ ३९ ॥

इति प्रतिज्ञायेति योज्यम् । भ्रातुर्युधिष्ठिरस्य भ्रातृव्यं शत्रुम् ॥ ३९ ॥

ननु मोक्षनिमित्ताऽप्यन्या प्रतिज्ञा सम्भवति । उत्तमश्च स पुरुषार्थेषु । सा कथं नोच्यते । अत्राह—

कार्योऽन्यत्र प्रतिज्ञायाः प्रयोगो न कथञ्चन ।

विषयप्रवणानां सुकुमारमतीनामपि रञ्जनाय हि काव्यं प्रवर्तते । तत्र विरलैकाधिकारिकतुरीयपुमर्थप्रधानं काव्यं न तद्धृदयाराधनाय कल्पेत । एकद्वास्तत्र रसिका भवेयुर्न वा । तस्मादुक्तेभ्यश्चतुर्भ्यो निमित्तेभ्योऽन्यत्र प्रतिज्ञाप्रयोगो न युक्तः । यद्वा एवं द्रष्टव्यम्—ये पुरुषार्थत्वेनातिगम्भीरा विषयाः तन्निमित्तैव प्रतिज्ञा प्रयोज्या न पुनः इमां कुल्यां तरिष्यामि इमां शाखां वृक्षस्य छेत्स्यामीति क्षुद्रविषयाम् । काव्योत्कर्षानाधायकत्वात् —इति ।

अथैवंविधायाः काव्यप्रतिज्ञाया दोषमाह—

**परित्यागश्च कर्तव्यो नासां चतसृणामपि ॥ ४० ॥**

परित्यागे सति प्रतिज्ञाभासा भवन्तीत्यर्थः ॥ ४० ॥

तत्र धर्मप्रतिज्ञाभासः—

**प्रायोपवेशाय यथा प्रतिज्ञाय सुयोधनः ।**
**राज्याय पुनरुत्तस्थाविति धर्मविरोधिनी ॥ ४१ ॥**

राज्यलोभेन पुनरुत्थाने 'सत्यं वद' 'नानृतं वदेत्' इति शास्त्रार्थातिलङ्घनात् धर्मविरोधि इति ॥ ४१ ॥

अर्थप्रतिज्ञाभासो यथा—

**आहूतो न निवर्तेऽहं द्यूतायेति युधिष्ठिरः ।**
**कृत्वा लब्धां शकुनिना दिदेवेत्यर्थबाधिनी ॥ ४२ ॥**

ननु कृतायाः प्रतिज्ञायाः परित्यागो दोष इत्युक्तम् । न चात्र तथा । यथाप्रतिज्ञं युधिष्ठिरस्यानुष्ठानात् । सत्यमेवमेतत् । किं तु परित्यागः स्वरूपेण दोषावह इति न ग्रहीतव्यम् । अपि तु अवश्यं प्राप्तव्यतया निश्चितस्यार्थस्य अप्राप्तिहेतुत्वात् । एवं च प्राप्तव्यतयाऽध्यवसितस्यार्थस्याप्राप्तावपि यदि दोषो भवति किमु वक्तव्यं प्राप्तस्यार्थस्य विनाशे । तेन स्थि-

तार्थविनाशकारिणीयं प्रतिज्ञा सुतरां दुष्यतीति ॥ ४२ ॥

कामप्रतिज्ञाभासो यथा—

अद्यारभ्य निवत्स्यामि मुनिवद्वचनादिति ।
पितुः प्रियाय यां भीष्मश्चक्रे सा कामबाधिनी ॥ ४३ ॥

प्रियाय प्रीतये । अद्यारभ्य मुनिवन्निवत्स्यामि इति वचनात् इति ब्रुवन् यां चक्रे सेति योज्यम् ।

'अद्य प्रभृति मे दाश ब्रह्मचर्यं भविष्यति ।'

इत्यादिपर्वाणि भीष्मस्य वाक्यम् ॥ ४३ ॥

कोपप्रतिज्ञाभासः—

अत्याजयद्यथा रामः सर्वक्षत्रवधाश्रयाम् ।
जामदग्न्यं युधा जित्वा सा ज्ञेया कोपबाधिनी ॥ ४४ ॥

सर्वक्षत्रवधविषयां प्रतिज्ञामिति योज्यम् । रामो दाशरथिः । 'अत्याजयत यां रामः' इति किं पाठ इति युक्तमन्वेष्टुम् ॥ ४४ ॥

चतुर्विधा प्रतिज्ञा तावद्विध एव तदाभासश्च प्रादर्शिषाताम् । पुनरप्येषा द्वेधा—कण्ठरवेणोक्ता अर्थाद्गम्या चेति । आद्या प्रदर्शिता । अभ्युपगमप्राप्तिनाम्नीमन्त्यामाह—

अथाभ्युपगमप्राप्तिः सन्धाभ्युपगमाद्विना ।
अनुक्तमपि यत्रार्थादभ्युपैति यथोच्यते ॥ ४५ ॥

अथेदानीं 'सन्धाभ्युपगमाद्विना' प्रतिज्ञायाः कण्ठरवेण प्रयोगं विना भवन्ती 'अभ्युपगमप्राप्तिः' आर्थी प्रतिज्ञा प्रदर्श्यते । का सा । उच्यते । यत्र शब्देन साक्षादनभिहितमपि विवक्षितस्यार्थान्तरस्याभ्युपगमं अभिहितार्थसामर्थ्यादेव प्रत्याययति तत्रेयमभ्युपगमप्राप्तिर्द्रष्टव्या ॥ ४५ ॥

यथा—

किमिन्द्रियद्विषा ज्ञेयं को निराक्रियतेऽरिभिः ।
को वा गत्वरमर्थिभ्यो न यच्छति धनं लघु ॥ ४५ ॥

अत्र सर्वत्र किंशब्दः क्षेपे । प्रतिषेध इति यावत् । यतमानस्य विपश्चितोऽपि पुरुषस्य मनः प्रसभं स्वस्वविषयेषु हरन्ति इन्द्रियाणि यो द्वेष्टि निरुणद्धि , तेन किं ज्ञेयम् । सर्वविज्ञानफलस्य प्रशमस्य लब्धत्वात् तत्त्वविशेषविज्ञानान्तरमनपेक्षितमित्युक्तं भवति । एवं प्रतिषेधे कण्ठोक्ते जितेन्द्रियस्य ज्ञानं सुसम्पादमित्यर्थतो लभ्यते । जेयमिति क्वचित् पाठो दृश्यते । स युक्ततरः । इन्द्रियेषु जितेषु नान्यत् किञ्चिज्जेतव्यमस्ति । तस्मात् 'तानि जेतुं यतिष्ये' इति गम्यते । को निराक्रियत इति । शत्रुकृतं परिभवं न कश्चित् सहत इत्यर्थः । शत्रुं हनिष्यामीति प्रतिज्ञाऽत्रार्थतो लभ्या । गत्वरं नश्वरम् । 'दानं भोगो नाशः' इति भर्तृहर्युक्तो न्याय इहानुसन्धेयः । लघु क्षिप्रम् । अवश्यं दास्यामीति गम्या प्रतिज्ञा ॥

ननु किमिति कविरेवमर्थगम्यां प्रतिज्ञां चिकीर्षति । कुतो न वाचनिकीं निबध्नाति । आहुश्च 'ऋजुमार्गेण सिद्ध्यन्तं को हि वक्रेण साधयेत्' इति । अत्रोच्यते—

किमित्ययं तु यः क्षेपः सौकर्यं दर्शयत्यसौ ॥ ४६ ॥

एवं प्रतिषेधः अभ्युपगम्यस्यार्थस्य सुकरत्वं दर्शयति । साक्षात् तत्तत्प्रतिज्ञाकरणमपेक्ष्य एवं प्रतिषेधमुखेन तत्प्रत्यायनं वक्तुरभिनिवेशातिशयेन ईषत्करत्वं कर्तव्यस्य गमयतीत्यानुभविकमेतत् । अस्मै प्रयोजनाय वक्रमार्गाश्रयणमिति ॥ ४६ ॥

इति प्रतिज्ञा । अथ हेतुः—

हेतुस्त्रिलक्ष्मैव मतः काव्येष्वपि सुमेधसाम् ।
अन्वयव्यतिरेकौ हि केवलावर्थसिद्धये ॥ ४७ ॥

काव्येष्वपि न परं शास्त्रेषु । त्रिलक्ष्मैव त्रिरूप एव । विदुषामिष्टः ।

कस्मात् । अन्वयव्यतिरेकावेव हि साध्यसिद्धिकरौ । अन्वयव्यतिरेकाभ्यामवगता व्याप्तिरित्यर्थः । व्याप्यव्यापकभावविरहे हि केनचिदर्थेन अर्थान्तरस्य निश्चयो दुर्लभः । तेन काव्येऽपि सपक्षासत्त्वं विपक्षासत्त्वं च हेतोरपेक्षणीयमिति ॥ ४७ ॥

सोऽयमुदाह्रियते---

यथाऽभितो वनाभोगमेतदस्ति महत्सरः ।
कूजनात् कुररीणां च कमलानां च सौरभात् ॥ ४८ ॥

आभोगो विस्तारः । वनसन्निहितः प्रदेशः तटाकवानित्ययमर्थः कुररीकूजनेन कमलसौरभेण च हेतुना सिद्ध्यतीति । अनुमीयमानस्य सरसः एतदिति प्रत्यक्षस्येव निर्देशः अनुमितिप्रामाण्यदार्ढ्याय । एतमिति वनाभोगविशेषणतया वा पठनीयम् ॥ ४८ ॥

ननु कूजनं कुररीषु सौरभं कमलेषु चास्ति । न पक्षे वनप्रदेशे । तथा च पक्षवृत्तित्वाभावात् कथमयं हेतुः । अत्रोच्यते–

अन्यधर्मोऽपि तत्सिद्धिं सम्बन्धेन करोत्ययम् ।
धूमादभ्रंकषात् साग्नेः प्रदेशस्यानुमामिव ॥ ४९ ॥

सत्यं कूजनं सौरभं च न पक्षस्य प्रदेशस्य धर्मः अपि तु ततो भिन्नानां कुररीणां कमलानां च धर्मः । अथापि सम्बन्धोऽस्त्येव पक्षस्य कूजनादेश्च । कोऽसौ सम्बन्धः । स्वाश्रयकुर्याद्यधिकरणत्वमिति गृह्यताम् । कूजन्तो हि कुर्यस्तस्मिन् प्रदेशे वर्तन्ते । तस्मात् प्रणालिकया कूजनमपि तत्सम्बद्धमेव । तेनायं कूजनादिर्धर्मः तस्य सरसः सिद्धिमनुमितिं जनयति । अभ्रंकषात् धूमात् जायमानां साग्नेः प्रदेशस्यानुमितिं स धूमो यथा जनयति तद्वत् । आकाशे धूमो दृश्यते । स तत्र दृष्टः अधो विद्यमानस्य वह्निमत्प्रदेशस्यानुमितिं जनयतीति प्रसिद्धम् । तत्र धूमस्य कथं पक्षवृत्तित्वमिति चेत् प्रणालिकया वाच्यम् । तथैव प्रकृतेऽपीति । धूमादभ्रंकषादित्यत्र प्रथमान्तत्वमुचितम् । किं तथा पाठोऽस्तीत्यन्वेष्टव्यम् ॥ ४९ ॥

हेतुर्द्विविधः समानाधिकरणव्यधिकरणभेदात् । तत्र व्यधिकरणो द-

र्शितः । कूजनात् सौरभादिति पञ्चम्यन्तनिर्देशात् पक्षवाचकपदसामानाधिकरण्याभावात् । अथ समानाधिकरणः प्रदर्श्यते—

अपृथक्कृतसाध्योऽपि हेतुश्चात्र प्रतीयते ।
अन्वयव्यतिरेकाभ्यां विनैवार्थगतिर्यथा ॥ ५० ॥

साध्य इह धर्मी विवक्षितः । पक्ष इति यावत् । पर्वतोऽपि हि वह्निमत्तया साध्यः । आह च 'साग्नेः प्रदेशस्यानुमाम्' इति । स पक्षः पृथक् भिन्नविभक्तिकतया व्यधिकरणतया न कृतः न निर्दिष्टः यस्य तथाभूतोऽपि हेतुरत्र काव्ये प्रतीयते दृश्यते । किं चान्वयव्यतिरेकाभ्यां विनैव सपक्षविपक्षवृत्त्यवृत्तित्वपर्यालोचनमन्तरेणैव साध्यधर्मस्य गतिर्विज्ञानं भवति । अत एव पञ्चम्यन्तत्वेन हेतुनिर्देशेऽनास्था । अर्थगतेरिति किं पाठ इति चिन्त्यम् ॥ ५० ॥

यथा—

दीप्रदीपा निशा जज्ञे व्यपवृत्तदिवाकरा ।
हेतुः प्रदीप्रदीपत्वमपवृत्तौ रवेरिह ॥ ५१ ॥

जज्ञे ज्ञायते स्म । व्यपवृत्तः अस्तमितः । यतो दीप्रदीपा अतो व्यपवृत्तदिवाकरा निशा जज्ञे । इह साध्यधर्मः रवेरपवृत्तिः । साध्यधर्मिणी निशा । तया सामानाधिकरण्यं हेतोः । एकविभक्तिनिर्देशात् । न चात्र सहृदयाः पक्षसपक्षसदसद्भावचिन्तां कुर्वन्ति । इममेव काव्यलिङ्गमलङ्कारमर्वाञ्चो ब्रुवते ॥ ५१ ॥

अथास्य हेतोराभासाः—

तस्यापि सुधियामिष्टा दोषाः प्रागुदितास्त्रयः ।
अज्ञानसंशयज्ञानविपर्ययकृतो यथा ॥ ५२ ॥

यथा शास्त्रहेतोः तथा काव्यहेतोरपीति अपेरर्थः । प्रागुक्ताः 'हेतुस्त्रिलक्षणो ज्ञेयो हेत्वाभासो विपर्ययात्' इति । पक्षवृत्तित्वाभावे अज्ञानकृत् । विपक्षावृत्तित्वाभावे संशयात्मकज्ञानकृत् । सपक्षवृत्तित्वाभावे साध्याभावज्ञानरूपविपर्ययकृत् ॥ ५२ ॥

बलाज्ञानसंशयज्ञानकृतौ यथा—

काशा हरन्ति हृदयमभी कुसुमसौरभात्।
अपामभ्यर्णवर्तित्वादेते ज्ञेयाः शरारयः ॥ ५३ ॥

निःसौरभं हि काशकुसुममिति हेतोः पक्षेऽसत्त्वात् तत्र हृदयहारित्वस्य साध्यस्य ज्ञानं न भवतीत्यज्ञानकृत्त्वम् । एते अग्रे दृश्यमानाः शरारयः एतन्नामानः पक्षिणः । 'शरारिराटिरातिश्च' इत्यमरः । अपामभ्यर्णवर्तित्वादित्ययं हेतुर्विपक्षे बकादावपि वर्तत इति शरारयो बकादयो वेति संशयकृत् । शरारव इति पाठेऽपि पक्षिविशेषवाचित्वं बोध्यम् । असमञ्जस एव वा स पाठः ॥ ५३ ॥

विपर्ययकृद्यथा—

असौ शुक्लान्तनेत्रत्वाच्चकोर इति गृह्यताम्।
तुल्यजातावदृष्टत्वात् साधयत्यचकोरताम् ॥ ५४ ॥

'असौ' इति दूरे स्थितस्य चक्षुर्गोचरस्य पक्षिव्यक्तिविशेषस्य पक्षस्य निर्देशः। चकोरत्वं साध्यम् । शुक्लान्तनेत्रत्वं हेतुः । अस्य हेतोर्दृष्टपूर्वायां यत्र क्वापि चकोरव्यक्तावदृष्टत्वाच्चकोरेतरत्वं पक्षस्यायं प्रत्याययतीति । तुल्या जातिर्यस्य स तुल्यजातिः। यादृशजातिमत्तया पक्षः साध्यः; तादृशचकोरत्वजातिमानित्यर्थः । तुल्या च सा जातिश्च तत्रेत्येव वा । चकोरसामान्य इत्यर्थः ॥ ५४ ॥

अथ दृष्टान्तः । तस्य लक्षणमुच्यते—

उक्तस्यार्थस्य दृष्टान्तः प्रतिबिम्बनिदर्शनम् ।

सदृशवस्त्वन्तरनिर्देशो दृष्टान्त इति ।

अत्रातिव्याप्तिं शङ्कते—

ननूपमाऽनुमैवास्तु

सदृशवस्त्वन्तरनिर्देशात्मा योऽयं दृष्टान्त उक्तः सोऽनुमानाङ्गमिति तावत् स्थितम् । अस्ति चैवमुपमायां सदृशवस्त्वन्तरनिर्देशः । तेन साऽनुमैव भवितुमर्हति । अनुमानाङ्गभूतो दृष्टान्त एवेत्यर्थः ।

तत्समाधीयते—

न हेत्वनभिधानतः ॥ ५५ ॥

हेतुः प्रधानमङ्गमनुमानस्य । तस्योपमायां प्रसक्तिरेव नास्ति । तथा सति कः प्रसङ्गोऽनुमानस्य । हेतोरभावे साध्यमपि न प्रसक्तमिति वेदितव्यम् ॥ ५५ ॥

ननु दृष्टान्तस्य एकस्यावयवस्य श्रवणादितरयोः साध्यसाधनयोरध्याहारः कर्तव्य इत्यत्राह—

**साध्यसाधनयोरुक्तिरुक्तादन्यत्र नेष्यते ।**
**मुखं पद्ममिवेत्यत्र किं साध्यं किं च साधनम् ॥ ५६ ॥**

व्याप्तौ सत्यां व्याप्येन यत्र व्यापकस्य प्रत्ययस्तत्र ह्यनुमानम् । एवंविधमेव स्थलमधस्तादुक्तं सर्वम् । ततोऽन्यत्र उपमादौ साध्यसाधनयोरुक्तिर्नेष्यते । न सम्भवतीत्यभिप्रायः । कथमिति चेत् श्रूयताम् । मुखं पद्ममिवेत्युपमा । तत्र मुखे पद्मसादृश्यमात्रं विवक्षितम् । न तु तदतिरिक्तं किञ्चित् साध्यत्वेन साधनत्वेन वा वक्तुमर्हं समस्ति । मुखं पद्ममिवास्तीति निराकांक्षं हीदं वाक्यम् । गौर्गच्छतीतिवत् । तस्मादध्याहारस्य न सम्भावनाऽपि । 'साध्यसाधनयोरुक्तिसत्त्वादन्यत्र सेष्यते ।' इति पठित्वा मुखमित्याद्युपमायां तदुभयाभावात् अनुमा नेष्यत इति प्रतिपाद्यमानं युज्येततराम् ॥ ५६ ॥

उपमावैलक्षण्यप्रदर्शनमुखेनैव दृष्टान्तं निदर्शयति—

**इति प्रयोगस्य यथा कलावपि भवानिह ।**
**श्रेयान् वृद्धानुशिष्टत्वात् पूर्वे कृतयुगे यथा ॥ ५७ ॥**

इह कलावपीत्यनुवादः पापभूयिष्ठेऽपि काले धार्मिकोत्तम इति स्तुतये, कार्तयुगानां पुरुषाणां दृष्टान्तत्वेन पक्षस्य प्रकृतस्य राज्ञस्तदन्यकालत्वसिद्धये च । भवानिति पक्षः । श्रेयस्त्वं श्लाघ्यगुणशीलवत्त्वं साध्यम् । वृद्धानुशिष्टत्वं हेतुः । यथा कृतयुगे स्थिताः प्राञ्च इति दृष्टान्तः । इत्येवंविधस्य न्यायवाक्यस्य साध्यं साधनं च यथाऽस्ति तथा मुखं पद्ममिवेत्यत्र

*

किं साध्यमस्ति किं साधनमस्ति । न किञ्चित् । तेन नानुमानमिति पूर्वेण योज्यम् ॥ ५७ ॥

इति उपात्तसाध्यसाधनो दृष्टान्तः प्रदर्शितः । अनुपात्तसाध्यसाधनं शुद्धदृष्टान्तं प्रदर्शयति—

**यत्र दृष्टान्तमात्रेण व्यज्येते साध्यसाधने।**
**तमाहुः शुद्धदृष्टान्तं तन्मात्राविष्कृतेर्यथा ॥ ५८ ॥**

तन्मात्रस्य दृष्टान्तमात्रस्य आविष्कृतेः शब्देन प्रतिपादनात् शुद्धदृष्टान्तः। न तूपमायामिव साध्यसाधनयोरभावात् ॥ ५८ ॥

यथा—

**भरतस्त्वं दिलीपस्त्वं त्वमेवैलः पुरूरवाः।**
**त्वमेव वीर प्रद्युम्नस्त्वमेव नरवाहनः ॥ ५९ ॥**

हे वीरेति सम्बोधनम् । 'वीरः' इति क्वचित् । तदा 'वीरस्त्वं' इति योज्यम् । त्वं कुलोत्तारकः पितृभक्तिभरितत्वात् भरतवत् । त्वं परिशुद्धसन्तानः श्रोत्रियोत्तमानुग्रहपात्रत्वात् दिलीपवत् । त्वं वेदप्रतिपादनार्हमहिमा विलक्षणगुणवृत्तशालित्वात् यथा इलायाः पुत्रः पुरूरवाः । त्वं लोकोत्तरस्त्रीकाम्यः अतिसुन्दरत्वात् प्रद्युम्नवत् । त्वं गान्धर्वभोगार्हः महाभाग्यशालित्वात् नरवाहनवत् । इति तत्र तत्र साध्यसाधनव्यञ्जना द्रष्टव्या ॥ ५९ ॥

ननु किमित्येवं साध्यसाधनयोर्व्यङ्ग्यत्वमाश्रित्य दृष्टान्तमात्रं प्रयुञ्जते। तयोरपि शब्देनोपादानं कस्मान्न क्रियते । अत्रोच्यते—

**कथमेकपदेनैव व्यज्येरन्नस्य ते गुणाः।**
**इति प्रयुञ्जते सन्तः केचिद्विस्तरभीरवः ॥ ६० ॥**

यदि विशिष्य किञ्चित्साध्यं साधनं च निर्दिश्येत तर्हि तन्मात्रं सिद्ध्येत्। दृष्टान्तवृत्तिगुणान्तरं न सिद्ध्येत् । तदर्थं पुनः साध्यान्तरसाधनान्तरप्रयोगे विस्तर आपद्येत । अतो विस्तरात् बिभ्यतो विचक्षणा एकं दृष्टान्तपदमात्रं प्रयुञ्जते । तेन हि श्रुतेन दृष्टान्ते यावन्तो गुणाः सन्ति ते सर्वे तत्तद्-

नुगुणहेत्वनुसन्धानेन सहृदयैःप्रकृते विज्ञातुं शक्यन्ते । अन्वयादिस्तु, इति भरतस्त्वमित्यादिरीत्या विस्तरभीरवः केचित् सन्तः प्रयुञ्जते । कस्मै फलाय ? अस्य प्रकृतस्य ते दृष्टान्तवर्तिनः सर्वे गुणा प्रकृपदेनैव दृष्टान्तवाचकेन कथं व्यज्येरन् प्रकाश्येरन् इत्यस्मै फलायेति ॥ ६० ॥

तुरीयपरिच्छेदोपक्रमे निर्दिष्टेषु दोषेषु अन्त्यद्वयवर्जमन्यान् सर्वांस्तत्रैव निरूप्य तद्द्वयनिरूपणमेतत्परिच्छेदार्थतया प्रत्यज्ञायि 'अथ प्रतिज्ञाहेत्वादिहीनं दुष्टं च वर्ण्यते' इति । तत्राद्यं प्रतिज्ञादिहीनमियता प्रबन्धेन न्यरूपि । अथान्त्यं दुष्टं प्रदर्शयन् कवीनां तत्परिहारेऽवधानसम्पत्तये निन्दार्थवादमाह—

**पदमेकं वरं साधु नार्वाचीननिबन्धनम् ।**
**वैपरीत्याद्विपर्यासं कीर्तेरपि करोति तत् ॥ ६१ ॥**

साधु दोषरहितं गुणवच्च एकमपि पदं श्रेयः श्लाघापदम् । अर्वाचीनं गुणाभावेन दोषवत्तया च अपकृष्टं तु निबन्धनं महान् प्रबन्धोऽपि न वरम् । कस्मात् । यस्मात् तत् अर्वाचीननिबन्धनं वैपरीत्यात् यादृशं विदग्धसहृदयरञ्जकं ततो विपरीतत्वात् अन्यथाभूतत्वादिति यावत् । कीर्तेरपि विपर्यासं अन्यथाभावं मालिन्यं करोति । तथा च कविभिरेतद्दोषवर्जने दत्तदृष्टिभिर्भवितव्यमित्युक्तं भवति ॥ ६१ ॥

इहोच्यमाना इमे वाक्यार्थदोषाः । त्रयश्चैते वक्ष्यन्ते । तत्रादौ शब्दद्वाराऽर्थस्य शोभानिरोधी यस्तं दोषमाह—

**अहृद्यमसुनिर्भेदं रसवत्त्वेऽप्यपेशलम् ।**
**काव्यं कपित्थमामं यत् केषांचित् तादृशं यथा ॥ ६२ ॥**

केषांचित् कवीनां काव्यं अहृद्यं सहसा हृदयमप्रविशत्, असुनिर्भेदं विदुषामपि सुखेन भेत्तुं अवगाहितुमशक्यम्, अत एव रसवत्त्वेऽपि अपेशलं अनधिगतशोभं सत्, यत् आमं अपक्वं कपित्थफलं तादृशं भवति ॥ ६२ ॥

यथा—

प्रजाजनश्रेष्ठवरिष्ठभूभृ-
च्छिरोऽर्चिताङ्घ्रेः पृथुकीर्तिधिष्ण्य ।
अहिघ्नपद्मस्य जलारिधाम्न-
स्तवैव नान्यस्य सुतस्य वृत्तम् ॥ ६३ ॥

हे पृथुकीर्तिधिष्ण्य महतो यशसो वासस्थानभूत महाराज, प्रजाः जनश्रेष्ठा वरिष्ठभूभृतः एतेषां यद्वा प्रजया सन्तत्या जनैः पौरजानपदैश्च श्रेष्ठाः समृद्धा ये वरिष्ठाः सेनाकोशभुजबलादिसम्पन्नाः भूभृतः तेषां शिरोभिरर्चिताङ्घ्री यस्य तस्य । अहीन् शत्रून् हन्तीति अहिघ्नस्तादृशः पद्मः सेनाव्यूहविशेषः यस्य तादृशस्य । जलस्य अरिः शत्रुः सूर्योऽग्निर्वा तत्तुल्यतेजसः । तवैव पुत्रस्य शोभनं चरित्रम् । न नृपालान्तरपुत्रस्य । एवंविधः सुवृत्तः पुत्रोऽन्यस्य यस्य कस्यापि नृपस्य नास्तीत्यर्थः । अत्र पादत्रयस्थं सर्वमहृद्यम् । श्रेष्ठ, वरिष्ठ, भूभृच्छिरः इति श्रुतिकटुत्वात् । आद्ययोः पर्यायतया पौनरुक्त्यप्रत्यायकत्वात् । धिष्ण्याहिपद्मजलारिपदानामसुन्दरत्वाच्च । अहिघ्नपद्मस्येत्येतत् असुनिर्भेदम् । तस्मात् विशिष्टापित्वनुरूपपुत्रचारित्रप्रतिपादनेन रसवत्त्वेऽप्यपेशलमेतद्भवतीति ॥ ६३ ॥

इति शब्दह्वारको दोष उक्तः । अथ निरलङ्कारत्वं दोषमाह—

अंशुमद्भिश्च मणिभिः फलनिम्नैश्च शाखिभिः ।
फुल्लैश्च कुसुमैरन्ये वाचोऽलङ्कुर्वते यथा ॥ ६४ ॥

निम्नैः नम्रैः ॥ ६४ ॥

यथा—

शुभमरकतपद्मरागचित्रे
सफलसपल्लवभूरिचारुवृक्षे ।
बहुकुसुमविभूषिते स तस्थौ
सुरमुनिसिद्धयुते सुमेरुपृष्ठे ॥ ६५ ॥

पूर्वनिर्देशक्रमेणेह मणिवृक्षकुसुमानां चित्रचारुविभूषितशब्दैरलङ्कारकत्वाभिधानमिति द्रष्टव्यम् ॥ ६५ ॥

ननु कोऽत्र दोषः । उच्यते—

**तदेभिरङ्गैर्भूष्यन्ते भूषणोपवनस्रजः ।**
**वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते ॥ ६६ ॥**

तदिति तत्रेत्यर्थकम् । उच्यत इति शेषः । सत्यमेतानि मण्यादीनि शोभासम्पत्तिरूपोपकारजनकतयाऽङ्गानि भवन्ति । परं तु तदुपकारभाजो न वाचः यन्मयानि काव्यानि ; अपि तु भूषणोपवनस्रजः । मणिभिर्हि कटकमकुटादीन्याभरणानि; शोभन्ते । वृक्षैरुपवनानि । कुसुमैः स्रजः । किं तर्हि वाचां शोभाकार्यङ्गम् । वक्रयोरर्थशब्दयोरुक्तिः या द्वितीयतृतीययोः परिच्छेदयोर्न्यरूपि । एवं वदन्नयं ग्रन्थकारः स्वभावोक्तिं न व्यवच्छिनत्तीति प्रागेवोक्तप्रायम् । एवं च 'शुभमरकत' इत्यादिपद्ये उपात्तानां मण्यादीनां वागलङ्कारकत्वाभावात् वागलङ्कारकारिण्या वक्रोक्तेरभावाच्च निरलङ्कारत्वाद्वार्तामात्रं तदिति । अर्वाञ्चः पुनरुदात्तप्रभेदमेनमाहुः ॥ ६६ ॥

पुनर्दोषान्तराणि चत्वार्याह —

**विरुद्धपदमस्वर्थं बहुपूरणमाकुलम् ।**
**कुर्वन्ति काव्यमपरे व्यायताभीप्सया यथा ॥ ६७ ॥**

विवक्षितार्थप्रतिकूलार्थत्वं अहृद्यार्थत्वं अपुष्टार्थत्वरूपमनपेक्षितार्थत्वं अप्रसन्नत्वं च दोषाः । क एषां वर्जनोपाय इति जिज्ञासायां कारणोच्छेद एव सर्वत्रानर्थानामात्यन्तिकपरिहारोपाय इति स्थितेः एषां दोषाणां कारणं प्रदर्शयतोक्तं व्यायतेति । विशेषेण दीर्घां रचनामिच्छतां एते दोषा आपतन्ति । तस्मादसति महत्यर्थे दीर्घबन्धो न कार्यः यत्रोपक्रान्तपूरणाय प्रवृत्तस्य कवेरमी दोषा भवन्तीति ॥ ६७ ॥

यथा—

**एलातक्कोलनागस्फुटबकुललताचन्दनस्पन्दनाढ्यो**
**मुक्ताकर्पूरचक्रागरुकमनाशिलास्थासकव्याप्ततीरः ।**

शङ्खव्राताकुलोऽन्तस्तिमिमकरकुलाकीर्णवीचीप्रतानो
दध्रे यस्याम्बुराशिः शशिकुमुदसुधाक्षीरशुद्धां सुकीर्तिम् ॥ ६८ ॥

स महापुरुषो जयति यस्य शश्यादिधवलां कीर्तिं अम्बुराशिर्दध्र इति योज्यम् । एलादयो लता वृक्षाश्च तेषां स्पन्दनेन समृद्धः । 'सृक्का' इति पठ्यमानमविज्ञेयार्थमशुद्धमिति भाति । मुक्तेत्यभ्यूहितः पाठः । चक्रं राशिः । स्थासकः पटलः विततशुष्ककर्दमच्छेदाकारः । सुधा अमृताशनम् । आद्यपादत्रये सर्व एवार्था अहृद्याः । वक्रोक्तिवन्ध्यत्वात् । एलातकोलेत्यादि तिमिमकरेत्यादि च महद्विशेषणद्वयमनपेक्षितार्थं पूरणमात्रफलम् । पाण्डरपदार्थप्राचुर्यं हि विशुद्धकीर्तिवहनवर्णनोपयोगि । अतथाभूताश्च एलादयस्तिम्यादयश्च । शश्यादिबहूपमानोपादानात् परं सुकीर्तिमिति सुरपि केवलं पादपूरणः । पाण्डरस्य शंखव्रातस्य अन्तःस्थत्वं प्रकृतप्रतिकूलम् । बहिःसत्त्वे हि धवलिमाऽभिवर्धेत । अप्रसादः स्फुटः ॥

दोषाः केचन कथिताः प्रथमे तुर्ये च ये परिच्छेदे ।
पदवाक्यगोचरास्ते प्रबन्धसामान्यगोचरास्त्वत्र ॥ ६८ ॥

द्वितीयादिपरिच्छेदचतुष्टयोपसंहारः—

इति निगदितास्तास्ता वाचामलंकृतयो मया
बहुविधकृतीर्दृष्ट्वाऽन्येषां स्वयं परितर्क्य च ।
प्रथितवचसः सन्तोऽभिज्ञाः प्रमाणमिहापरे
गुरुतरधियामस्वाराध्यं मनोऽकृतबुद्धिभिः ॥ ६९ ॥

पूर्वाचार्यग्रन्थापरिचये उच्छृंखलता । स्वयमपरितर्केऽनुवादमात्रविश्रान्तेः शुकसब्रह्मचारिता । अत उभयमादृतम् । न चैतावता मन्तव्यं सर्वमेतद्यथोक्तं ग्राह्यमिति । किं तर्हि । इहापरे प्रमाणं साध्वसाधुनिर्णयकृतः । कीदृशा अपरे । अभिज्ञाः न जडाः । अभिज्ञा अपि सन्तः सज्जनाः । दुर्जना हि रागद्वेषवशेन असन्तं दोषं गृह्णीयुः सन्तमपि न गुणम् । तथा-

भूताः सन्तोऽपि प्रथितवचसः येषां वचः प्रथितं लोके सर्वतः प्रसृतम्, प्रसिद्धम्, आदृतमिति यावत्। यथा सर्वत्र आदृतं भवेत् तथा गुणवद्वचो येषाम्; ये प्रौढग्रन्थनिर्माणचतुराः ते इति भावः। स्वयं ग्रन्थनिर्माणासमर्था हि पूर्णवैदुष्या अपि सौजन्यनिधयोऽपि परकृतग्रन्थगुणागुणविमर्शे न तथा पटवो भवन्तीति। ननु सर्वविदो भवतोऽपि कथमेवं परत्र प्रामाण्याश्रयणदैन्यम्। नैतदेवम्। न तादृशः कश्चिदिहास्ति यस्माद्बुद्धिमत्तरो लोके यः कोऽपि न भवेत्। एकैकापेक्षयाऽपि सन्ति बुद्धिमत्तराः। तानपेक्ष्य एकैकोऽपि अकृतबुद्धिरेव भवति। एवंविधैः कृतश्च ग्रन्थः तेषां विशिष्टानां मनस आराधनाय नालम्। न ह्यल्पगुणा कृतिर्महामतीनां प्रीतये कल्पते। तस्मात् येन केनापि कृतस्य ग्रन्थस्य साध्वसाधुभावे तदपेक्षया विशिष्टा एव प्रमाणमिति॥ ६९॥

ज्योतींषि विभ्राजयते रसाढ्यं
प्रस्कन्दत्यम्बु ददाति वेदान्।
न विस्मितस्तत्र भवामि किं तु
दुरुच्य किञ्चिद् वत ताण्डवोत्कः॥

इति पञ्चमः परिच्छेदः॥

---

# अथ षष्ठःपरिच्छेदः ॥

इयमूर्मिरियं झंझा कथं नौर्मा बिभीहि भोः ।
झंझोर्मी वपुषो तत्स्थं दयालुं पश्य देहिनम् ॥

---

काव्यालङ्कारकरणे ग्रन्थकारस्य प्रवृत्तिः । तत्समाप्तौ, यदादौ विरुद्धमतीनां केषांचित् दर्शनं प्रतिक्षिपता उक्तम्—

"रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम् ॥

तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥" (I. 14-15.)

इति; तत्र सौशब्द्यस्य शब्दहीनपरिहारमात्रात्मनोऽर्थव्युत्पत्तिकारिता नास्तीति यत् स्थितं तावता तत्र कवीनामनादरो नैव युक्तः । अस्ति हि सुप्सु तिङ्क्षु चानल्पो विशेषः कवीनामवधेय इति बुबोधयिषन् प्रथमं व्याकरणं स्तौति—

सूत्राम्भसं पदावर्तं पारायणरसातलम् ।
धातूणादिगणग्राहं ध्यानग्रहबृहत्प्लवम् ॥ १ ॥
धीरैरालोकितप्रान्तममेधोभिरसूयितम् ।
सदोपभुक्तं सर्वाभिरन्याविद्याकरेणुभिः ॥ २ ॥
नापारयित्वा दुर्गाधममुं व्याकरणार्णवम् ।
शब्दरत्नं स्वयं गम्यमलंकर्तुमयं जनः ॥ ३ ॥

अयं स्वभावतो दुर्बलमतिर्जनः जातमात्रः पुरुषः । पदं वार्तिकम् । पारायणं भाष्यम् । रसातलं भूतलम् । धातव उणादयो गणाश्च ग्राहाः । ध्यानस्य पुनःपुनरनुसन्धानरूपस्य मननस्य ग्रहः दृढपरिग्रहः । धीरा अपि प्रान्तमेवावलोकितुमीशते । अमेधसामसूयाऽपि महतां गुणभूमानं

व्यनक्ति । 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति सम्प्रदानत्वं आ-ख्यातव्यतिरिक्तस्थलेषु प्रायशो नाद्रियन्ते । तेन असूयितमिति कर्मणि क्तः । विषयतया अमेधःकर्तृकासूयाविशिष्टमिति क्लिष्टकल्पना । ननु कथं करेणुभिरर्णवस्योपभोगः । एकदेशविवर्तिरूपकान्तरमिदम् । वार-णयूथपतित्वं व्याकरणस्य गम्यमिति केचित् । भवेदेतदेवं यदि उपभुक्त-मिति व्याकरणं विशेष्येत । व्याकरणार्णवस्तु विशेष्यते । तेनायमस-माधिः । अवगाह्य स्नात्वा वा तीरवनेषु विहृत्य वा उपभुज्यत इति ग्रही-तुमुचितम् । अप्रुमिति अतिविस्तृतस्य निर्देशः । दुःखेन गाधनीयं स्पृश्यतलं अशक्यस्पर्शतलमिति यावत् । अपारयित्वा अतीर्त्वा शब्दरत्नं स्वयं स्वस्य गम्यं उपयोगार्हं कर्तुं नालमिति यथास्थितं व्याख्यातम् । चरमेऽर्धे पाठान्तरमन्वेष्टुं युक्तम् ।

यद्यपि 'शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः' इत्यत्र सौशब्द्यम-पि शब्दालङ्कारान्तर्गततया ग्रन्थकारस्येष्टम्; तदिदानीं निरूपयितुमारभ इत्यपि केषांचित् भायात् तथाऽपि 'रूपकादिरलङ्कारस्तस्यान्यैर्ब-हुधोदितः' इत्येतदपेक्षयैव 'शब्दाभिधेय.... ....इष्टं द्वयं तु नः' इत्य-भिधानात् सौशब्यस्य तत्रान्तर्भावो नोचितः । अन्तर्भावे शब्दालङ्कार-प्रकरण एवास्य निरूपणीयत्वादिहासङ्गतिश्चेति बोध्यम् । यदपि—'अथ प्रतिज्ञाहेत्वादिहीनं दुष्टं च वर्ण्यते' इति प्रतिज्ञाय 'पदमेकं वरं साधु' इत्यादिना पञ्चमान्ते निरूपितस्य दुष्टस्य अवशिष्टनिरूपणमिह क्रियते । वक्ष्यति हि 'वक्रवाचां कवीनां ये प्रयोगं प्रति साधवः । प्रयोक्तुं ये न यु-क्ताश्च तद्विवेकोऽयमुच्यते' इति—इति; तदपि 'इति निगदितास्तास्ताः....' इत्युपसंहृतत्वात् 'तस्य चाधिगमे यत्नः कार्यः' 'तद्विवेकोऽयमुच्यते' इत्य-पूर्ववदुपक्रमाच्च चिन्त्यमिति ज्ञेयम् ॥ ३ ॥

एवं स्तुतस्य व्याकरणस्याध्ययनं विधत्ते—

**तस्य चाधिगमे यत्नः कार्यः काव्यं विधित्सता ।**
**परप्रत्ययतो यत्तु क्रियते तेन का रतिः ॥ ४ ॥**

तस्य व्याकरणस्य । ननु 'शब्दच्छन्दोऽभिधानार्थाः' इति पूर्वमेवायमर्थो विहित इति किमिह पुनरारम्भेण । उच्यते । न व्याकरणाधिगमस्तत्र विहितः । किं तर्हि । साधुशब्दस्वरूपाधिगम इति । ननु च प्राक्तनानां महाकवीनां याः सूक्तयः तासां परिशीलनेनैव सुलभः शब्दाधिगम इति किं व्याकरणेन । अत्राह परेति । अन्यस्मिन् विश्वासं प्रमाणत्वबुद्धिं कृत्वा यः शब्दप्रयोगः क्रियते तेन सन्तोषो न भवतीति ॥ ४ ॥

ननु कस्मादेवम् । उच्यते—

**नान्यप्रत्ययशब्दा वागाविभाति मुदे सताम् ।**
**परेण धृतमुक्तेव सरसा कुसुमावली ॥ ५ ॥**

अन्यस्मिन् पुरुषान्तरे प्रत्ययः प्रामाण्यं यस्य तादृशः शब्दो यत्र सा वाक् सन्दर्भः रचना कृतिः सतां विवेकिनां सन्तोषाय न सम्पद्यते । यथा सरसाऽपि कुसुममाला परेण धृतमुक्ता । न ह्यन्यधृतमुक्तायाः स्रजः सौगन्ध्यसौकुमार्यसम्पन्नत्वेऽपि सन्तः स्वयं तां धारयन्ति । तत्कस्मात् । अन्योपभुक्तत्वमात्रेणैव । तत्समानं पदरचनायामपि । अन्योपयुक्तोपजीवनं हि अशक्तिं प्रथयति । न चैवंविधं दैन्यं सन्तः सहेरन्निति ॥ ५ ॥

ननु महतो व्याकरणशास्त्रस्याधिगमे अदृष्टकालादिघटिता गुर्वी सामग्र्यपेक्षिता । न च सा सर्वस्य संपत्स्यते । तत्र किं निरन्तरपरिचिन्तितप्राक्तनकवितिलकसूक्तिसहस्रावधृतसाधुशब्दस्वरूपैरपि कृत्स्नव्याकरणानधिगममात्रेण कवीभवनमनभिलषणीयम् । अत्राह—

**मुख्यस्तावदयं न्यायो यत्स्वशक्त्या प्रवर्तते ।**
**अन्यसारस्वता नाम सन्त्यन्योक्तानुवादिनः ॥ ६ ॥**

अस्ति हि गौणमुख्यविभागः । तत्र स्वयं व्याकरणं कृत्स्नमधीत्य पदानां साध्वसाधुभावं विविच्य अन्यानुपजीवनेन निष्कम्पप्रयोगकरणमित्ययं मुख्यः पक्षः । एवं कर्तुमशक्तौ परोपजीवनमिति गौणः पक्षः । तत्र सति सम्भवे मुख्यः पक्ष आश्रयणीय इत्ययमुपदेश इति । अन्यतः प्राप्तं सारस्वतं विद्या यैस्ते अन्यसारस्वताः । सन्ति अप्रशस्ता इत्यर्थः ॥ ६ ॥

प्रसङ्गात् पदस्वरूपमवधारयन् परमतमपाकरोति—

प्रतीतिरर्थेषु यतस्तं शब्दं ब्रुवते परे ।
धूमभास्वोरपि प्राप्ता शब्दताऽग्न्यनुमां प्रति ॥ ७ ॥

अर्थप्रतीतिहेतुत्वं शब्दत्वमित्यन्ये ब्रुवते । तन्नोपपद्यते । धूमालोकयोरपि वह्नेरनुमित्यात्मकप्रतीतिहेतुत्वेन शब्दत्वप्रसङ्गादिति ॥ ७ ॥

किं तर्हि भवतो मतम् । उच्यते—

नन्वकारादिवर्णानां समुदायोऽभिधेयवान् ।
अर्थप्रतीतये गीतः शब्द इत्यभिधीयते ॥ ८ ॥

नन्वित्यवधारणे । अभिधेयवान् वाच्यार्थवान् वृत्तिमानिति यावत् । अभिधेयवान् अभिधेयार्थप्रतीत्यर्थमुच्चारितो वर्णसमुदाय एव पदमित्युक्तं भवति । वर्णसमुदाय इत्यनेन धूमादेर्व्यावृत्तिः । अभिधेयवानिति पदैकदेशस्य पदान्तराक्षरोपेतपदस्य च । लिपिव्यावृत्तये विशेषणान्तरम् । कम्बुग्रीवादिमदर्थाभिधायिनो घटादिपदस्य आकाशार्थे शब्दत्ववारणाय वा ॥ ८ ॥

अत्राखण्डशब्दवादिनः प्रत्यवतिष्ठन्ते । वर्णात्मकशब्दवादेऽर्थप्रतीत्यनुपपत्तिं मन्यमानानां तेषामेष विकल्पः —वर्णसमुदायो हि पदमिष्यते । स समुदायो वर्णेभ्योऽतिरिक्तो न वा । न तावदन्त्यः पक्षो युज्यते । तथा हि—

प्रत्येकमसमर्थानां समुदायोऽर्थवान् कथम् ।
वर्णानां क्रमवर्तित्वान्न्याय्या नापि च संहतिः ॥ ९ ॥

न हि वर्णाः प्रत्येकमर्थमभिदधति । शेषवैयर्थ्यापत्तेः । एवं प्रत्येकमसमर्थानां वर्णानां समुदाये कथं अर्थविशेषप्रत्यायनसामर्थ्यमाविर्भविष्यति । न हि अचेतनानां घटादीनां समुदाये चैतन्यं प्रादुःष्यात् । किंच वर्णानां समुदाय एव न सम्भवति । एकदेशकालावच्छिन्नत्वं हि समुदायः । न चैतद्वर्णेषु सम्भवति । क्रमवर्तित्वात् । घकाराकारटकाराकारा हि घटपदघटकाश्चत्वारो वर्णाः क्रमेणोच्चार्यमाणाः क्रमेण चतुर्षु क्षणेषु एकैकशो वर्तन्ते । नत्वेकस्मिन् क्षणे चत्वारोऽपि वर्तन्त इति तेषां संहतिः समुदायात्मना स्थितिः न न्याय्या न युक्तियुक्ता ॥ ९ ॥

नाप्याद्यः पक्षो घटते । प्रमाणाभावात् । तदेतदाह—

**न चापि समुदायिभ्यः समुदायोऽतिरिच्यते ।**
**दारुभित्तिभुवोऽतीत्य किमन्यत् सद्म कल्प्यते ॥ १० ॥**

दारुभित्तिभुवां समुदायस्तावत् सद्म । तत्र दारुभित्तिभूभ्योऽतिरेकेण किमन्यदस्ति । तथैव आदिमध्यावसानश्रुतवर्णातिरिक्तः तत्समुदायो नाम न कश्चिदस्ति । 'कथ्यते' इति पठितुं युक्तम् ॥ १० ॥

एवं परपक्षमाक्षिप्य पूर्वपक्षी स्वपक्षमाह—

**तस्मात् कूटस्थः**

कूटवत् स्थाणुवत् तिष्ठति निश्चलमिति कूटस्थः नित्य इत्यर्थः । श्रूयमाणवर्णातिरिक्तं स्फोटाख्यं नित्यं पदमित्यभिसन्धिः ॥

तमेतं पक्षं निराकरोति—

**इत्येषा शाब्दी वः कल्पना वृथा ।**
**प्रत्यक्षमनुमानं वा यत्र तत्परमार्थतः ॥ ११ ॥**

एषा उक्तविधा वः स्फोटवादिनां शब्दसम्बन्धिनी अतिरिक्तत्वनित्यत्वकल्पना निष्फला अङ्गीकारानर्हा । कस्मात् । अप्रामाणिकत्वात् । यस्मिन् विषये प्रत्यक्षमनुमानं वा सम्भवति तत्परमार्थतोऽस्तीत्यभ्युपगम्येत । न च

वर्णातिरिक्ते पदे प्रत्यक्षमस्ति । अदर्शनात् । नाप्यनुमानम् । तादृशपदनिरूपितव्याप्तिमतो हेतोः कस्यचिदभावात् । तस्मादपारमार्थिकं तदिति ॥ ११ ॥

एवमतिरेकवादिनः साक्षात् प्रतिबोधिताः । यद्यपि ते गृहीतग्राहितया अप्रामाणिकमपि तं पक्षं न परित्यजेयुः तथाऽपि स पक्षो लोकेन सर्वथोपेक्षणीय इति प्रतिबोधयन् उक्तमेवार्थं साभिनिवेशं भङ्ग्यन्तरेणाह—

**शपथैरपि चादेयं वचो न स्फोटवादिनाम् ।**
**नभःकुसुममस्तीति श्रद्दध्यात् कः सचेतनः ॥ १२ ॥**

यथा गगनकुसुमं केनापि प्रमाणेन न प्रमीयत इत्यपारमार्थिकं तथैव वर्णातिरिक्तं पदम् । अतस्तदस्तीति बहुधा शपथकरणेऽपि लोकेन स्फोटवादिन उपेक्षितव्या इति ॥ १२ ॥

नन्वेवं स्फोटस्यानङ्गीकार्यत्वेऽपि समुदायातिरेकानतिरेकविकल्पेन तद्वादिभिरुद्भावितं वर्णसमुदायात्मनः पदस्यार्थप्रत्यायकत्वानुपपत्तिदूषणं कथं परिह्रियताम् । अत्रोच्यते—

**इयन्त ईदृशा वर्णा ईदृगर्थाभिधायिनः ।**
**व्यवहाराय लोकस्य प्रागित्थं समयः कृतः ॥ १३ ॥**

प्राक् सर्गादौ लोकस्य व्यवहाराय अन्योन्याभिप्रायप्रत्यायनाय समयः सङ्केत इत्थं कृतः । कथम् । एतावन्तः एतादृशक्रमविशिष्टा वर्णा एतदर्थाभिधायिन इति । खेति खकाराकारौ द्वौ वियद्वाचिनौ । खरेति खकाराकाररेफाकाराश्चत्वारः तिग्मवाचिनः । तथा मेति द्वौ वर्णौ प्रतिषेधवाचिनौ लक्ष्मीवाचिनौ च । मालेति चत्वारः स्रग्वाचिनः । राज, जरा इत्युभयत्रापि यद्यपि वर्णाश्चत्वार एव तथाऽपि क्रमभेदादर्थभेदः । तथा चेत्थं सङ्केतस्य गृहीतत्वे क्रमवर्तिनामेव वर्णानां श्रवणानन्तरं तादृशक्रमविशिष्टानामेव एकस्मृत्यारूढानामर्थप्रतीतिजनकत्वे न किञ्चित् सङ्कटमिति

यत्किञ्चित्प्रमाणागोचरस्फोटकल्पनाप्रयासोऽत्यन्तमनपेक्षित इत्यभिसन्धिः १३।

नन्वेवं वर्णानामेव पदत्वेऽनित्यत्वं तस्य प्राप्नोति । न चेष्टापत्तिः । अर्थप्रत्ययानुपपत्तेः । देवदत्तोच्चारणाधीनवर्णसमुदायात् यज्ञदत्तोच्चारणाधीनवर्णसमुदायस्य भिन्नत्वेन पदभेदे सति पूर्वं कालान्तरे अन्यस्मिन् पदे सङ्केतस्य गृहीतत्वेऽपि इदानीं श्रुतेऽभिनवे पदान्तरे सङ्केतस्याग्रहणात् । अथ तु नित्यमेकं अखण्डं पदम् तदा गृहीतशक्तिकस्य तस्यैव पदस्य कालान्तरेषु श्रवणाद्युक्तं तस्यार्थप्रतीतिकारित्वम् । आहुश्च वैयाकरणा अपि शब्दस्य नित्यत्वं 'सिद्धे शब्दार्थसम्बन्धे' इति । अत्रोच्यते--

**स कूटस्थोऽनपायी च**

सः उक्तविधसङ्केतविषयः शब्दः कूटस्थः अविक्रियः विकृतिरहितः अनपायी च विनाशशून्यश्च । यथा तत्तद्गोव्यक्तेः किंचित्कालमवस्थाय विनश्वरत्वेऽपि गोत्वावच्छिन्नस्य वस्तुनो न विनाशः किन्त्वाप्रलयमनुवर्तमानतैव तथैव देवदत्तोच्चारिते गोपदे वर्णानां सद्यो निवृत्तत्वेऽपि, यज्ञदत्ताद्युच्चारणकाले वर्णान्तरप्रादुर्भावेऽपि , गकारत्वावच्छिन्नोत्तरौकारत्वरूपानुपूर्व्यवच्छिन्नस्य स्थायित्वात् तस्यैव सङ्केतविषयत्वाच्च नास्त्यनुपपत्तिरर्थप्रत्ययस्येति ।

ननु स्फोटानङ्गीकारे नाद एव भवतां शब्दः प्राप्नोति । नादाभिव्यङ्ग्यश्च शब्द इष्यते । तेन श्रूयमाणध्वन्यपरपर्यायनादात्मकवर्णसमूहातिरिक्तं पदमेष्टव्यम् । अत्रोच्यते—

**नादादन्यश्च कथ्यते ।**

नास्माकं नादः शब्दः प्राप्नोति । नादादन्योऽस्माकमपि शब्दः । कः । अकारादिवर्णसमुदायः । ननु नाद एवायम् । न । कस्तर्हि नादः । वाय्वादिसंयोगविभागसन्तानः यः शब्दजनक इति ।

एवं शब्दस्वरूपं स्थितम् । अथास्यार्थेन कीदृशः सम्बन्धः । तदेतत् पूर्वमेवोक्तं 'प्रागित्थं समयः कृतः' इति । गौतमोऽप्याह 'सामयिकत्वा-

च्छब्दार्थसम्प्रत्ययस्य' इति । अत्रान्ये विप्रतिपद्यन्ते । यथा ज्वलनस्य दाहशक्तिः स्वाभाविकी तथा शब्दस्यार्थप्रत्यायनशक्तिरित्येषां दर्शनम् । तदरोचयमान आह—

**मन्दाः सांकेतिकानर्थान् मन्यन्ते पारमार्थिकान् ॥ १४ ॥**

सङ्केताधीनप्रत्ययान् अर्थान् विवेचनशक्तिविकलाः पारमार्थिकशब्दशक्तिगम्यान् मन्यन्ते । विवेकिनस्तु नैवामीति ॥ १४ ॥

ननु स्वाभाविकी प्रत्यायनशक्तिः पदानामवश्यं वाच्या । अन्यथा शब्दार्थसम्बन्धस्य नित्यत्वानुपपत्तेः । समयो हि केनचिदिदम्प्रथमतया कार्यः । तत्र नित्यत्वं न घटते । प्रतिपादयन्ति चास्य नित्यत्वं शास्त्रकाराः । यथा जैमिनिः 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति । कात्यायनवचनं च पूर्वमेवोदाहृतं 'सिद्धे शब्दार्थसम्बन्धे' इति । अत्राह—

**विनश्वरोऽस्तु नित्यो वा सम्बन्धोऽर्थेन वा सता ।**
**नमोऽस्तु तेभ्यो विद्वद्भ्यः प्रमाणं येऽस्य निश्चितौ ॥ १५ ॥**

सता भावरूपेण अर्थेन शब्दस्य सम्बन्धो विनश्वरो अनित्यो वाऽस्तु नित्यो वा । इति द्वितीयमपि वाकारं पूर्वत्र योजयित्वा व्याख्येयम् । येऽस्य निश्चयविषये प्रमाणं भवन्ति धीरभावं प्रदर्शयन्ति तेभ्यो नमः । महर्षय एवात्र भिन्नमतयः । गौतमो ह्येकधा वदति जैमिन्यादयोऽन्यथा । तत्र निर्णयं कर्तुं के वयम् । तस्मादत्र इत्थं तथेति प्रतिज्ञाकारिणो न स्वशक्त्यशक्तिनिरूपका इति । औदासीन्यमेवेह अस्माकमुचितमिति हृदयम् । 'अर्थेन वा सता' इत्यत्र समीचीनतरं पाठान्तरमन्वेष्टुमुचितम् ॥ १५ ॥

'भावरूपेणार्थेन' इत्युक्तम् । किमभावरूपोऽपि केषांचिदर्थोऽस्तीति चेदस्तीत्याह—

**अन्यापोहेन शब्दोऽर्थमाहेत्यन्ये प्रचक्षते ।**
**अन्यापोहश्च नामान्यपदार्थापाकृतिः किल ॥ १६ ॥**

अन्ये बौद्धाः शब्दः अन्यापोहेन अर्थं प्रत्याययतीति वदन्ति । कोऽन्यापोहो नाम । पदार्थान्तरभेदः । गौरिति पदं न गोत्वावच्छिन्नं बोधयति किन्तु अगोभिन्नमित्युक्तं भवति ॥ १६ ॥

क्लिष्टेत्यनङ्गीकारः सूचितः तदाह—

यदि गौरित्ययं शब्दः कृतार्थोऽन्यनिराकृतौ ।
जनको गवि गोबुद्धेर्मृग्यतामपरो ध्वनिः ॥ १७ ॥

गोशब्दाद्गोत्वावच्छिन्नप्रत्ययो न भवतीति वदतो महत् साहसम् । सर्वलोकविरोधात् । तेन सोऽवश्यमभ्युपेत्यः । तत्र यद्यन्यापोहोऽपि शब्दार्थः तर्हि श्रुतेन गोशब्देनास्य प्रत्यये जनिते गवि गौरिति बुद्धेः गोत्वबुद्धेः जनको ध्वनिः शब्दः मृग्यतां दुर्लभ इत्यर्थः ॥ १७ ॥

नन्वेक एव गोशब्द उभयमपि जनयति अपोहबुद्धिं गोत्वबुद्धिं च । नैतदुपपद्यते । तथा हि—

अर्थज्ञानफलाः शब्दा न चैकस्य फलद्वयम् ।
अपवादविधिज्ञाने फले चैकस्य वः कथम् ॥ १८ ॥

शब्दानामर्थज्ञानं फलम् । तत्रैकस्य शब्दस्य एकमेवार्थज्ञानं फलम् । न तद्द्वयम् । आहुश्च सकृत् प्रयुक्तः शब्दः सकृदेवार्थं गमयतीति । तथा सति कथं युष्माकं मते एकस्य शब्दस्य द्वे ज्ञाने फले उच्येते । अपवादः अपोहः व्यावृत्तिः भेदः । विधिः भावः गोत्वादिः । तयोर्ज्ञाने । फलद्वयोपपादनं रत्नकीर्तिकृतावपोहसिद्धौ द्रष्टव्यम् ॥ १८ ॥

एवमेकस्य शब्दस्य फलद्वये अयुक्ते, अपोहो वा शब्दगम्यः गवादिर्वेति विमर्शे, उत्तरः पक्षो युक्तः न पूर्वः । कस्मात् । उक्तं हि प्राक् गोबुद्धेराकस्मिकत्वप्रसङ्ग इति 'जनको गवि गोबुद्धेर्मृग्यतामपरो ध्वनिरित्यनेन । अन्यच्चेदं द्रष्टव्यम् ।—गामनवबुद्ध्य अगोभेदो न बोद्धुं शक्यः । अभावस्य प्रतियोगिनिरूपणीयत्वात् । तत्र यदि प्रथमं गोशब्दश्राविणां गोप्रतीति-

मेष जनयति पुनस्तस्य अपोहबोधनाय प्रवृत्तौ नास्ति हेतुरिति निष्प्रमाणकं तदभिधायित्वं शब्दस्येति । तदिदमाह—

पुरा गौरिति विज्ञानं गोशब्दश्रवणाद्भवेत् ।
येनागोप्रतिषेधाय प्रवृत्तो गौरिति ध्वनिः ॥ १९ ॥

यस्मादगोप्रतिषेधं बोधयितुं प्रवृत्तः गौरिति शब्दः तस्मात् स प्रथमं प्रतियोगिन्या विज्ञानं जनयेदेव । तथा चेत् पुनरपोहाभिधानमप्रमाणकम् ॥ १९ ॥

न परमेवं अर्थ एव दुःस्थितो बौद्धानां यावत् वाचकं पदमपि तथेत्याह—

वर्णभेदादिदं भिन्नं वर्णाः स्वांशविकल्पतः ।
के शब्दाः किञ्च तद्वाच्यमित्यहो वर्त्म दुस्तरम् ॥ २० ॥

इदं पदम् । 'वर्णभेदात् पदं भिन्नम्' इत्येव पठितुं युक्तम् । वर्णाश्च स्वावयवनिरूपणवशेन भिद्यन्ते । स्वलक्षणापरपर्यायव्यक्तिव्यतिरिक्तं सामान्यं सौगतैर्नेष्यते । यथाहुः—

एतासु पञ्चस्ववभासिनीषु प्रत्यक्षबोधे स्फुटमंगुलीषु ।
साधारणं षष्ठमिहेक्षते यः शृङ्गं शिरस्यात्मन ईक्षते सः ॥

तेन सर्वे वर्णाः तदा तदा उच्चरितप्रध्वस्ता भवन्ति । तथा सति एको गोशब्दः एको घटशब्द इति नास्ति । किं तु यथा घटशब्दगोशब्दौ मिथो भिद्येते तथैव अद्येह उच्चारिताः कालान्तरदेशान्तरोच्चारिताश्च गोशब्दा अन्योन्यं भिद्यन्ते । यथैव पदानि सावयवानि तदा तदा तत्तदवयवविनाशानुपातिविनाशानि अन्यान्यन्यानि भवन्ति तथैव वर्णा अपि सर्वानित्यत्ववादिनां तथागतानां मते स्वयमपि सावयवाः सन्तो विनश्यन्तीति अन्येऽन्ये भवन्ति । एवं सति अयं शब्दः अस्यार्थस्य वाचक इति चिरानुवर्तमानव्यवहारदर्शनाधीनः सङ्केतग्रह एव न निष्पत्तुमर्हतीति तेषां मते शब्दप्रमाणमार्गोऽतीव दुरधिगम इति ॥ २० ॥

**

एतावता निरूपितस्वरूपः शब्दो विभज्यते--

**द्रव्यक्रियाजातिगुणभेदात् ते च चतुर्विधाः ।**
**यदृच्छाशब्दमप्यन्ये डित्थादिं प्रतिजानते ॥ २१ ॥**

आकाशमिति द्रव्यस्य वाचकम् । पाचकादि क्रियायाः । गवादि जातेः । नीलादि गुणस्य । अन्ये स्वाभाविकशक्तिवादिनः । आधुनिकपुरुषेच्छयैव केवलया शरीरविशेषे निवेशितं डित्थादिशब्दमपि पञ्चमविधात्वेन आतिष्ठन्ते । स्वमते तु गवादिशब्दानामपि डित्थादिशब्दवत् साङ्केतिकत्वेनाविशेषात् आकाशशब्दवत् द्रव्यवाच्ययमिति नातिरिक्तत्वम् ॥ २१ ॥

वक्ष्यमाणविवेकाय शब्दस्य भूमानं दर्शयति —

**नानाभाषाविषयिणामपर्यन्तार्थवर्तिनाम् ।**
**इयत्ता केन वाऽमीषां विशेषादवधार्यते ॥ २२ ॥**

चतुर्धा, मतान्तरे पञ्चधा च शब्दा भिद्यन्त इत्युक्तम् । प्राकृतापभ्रंशभेदेन तदवान्तरभेदैश्च पुनर्बहुधा विभागः सम्भवति । वाच्यानामर्थानां द्रव्यादिभेदकृतचातुर्विध्येन वाचकानां शब्दानां चातुर्विध्यमदर्शि । अर्थानां प्रकारान्तरेण अपरिमितधा विभागः सम्भवति—चेतना अचेतनाः, जङ्गमाः स्थावराः, चेतनसम्बन्धिनो गुणादयः अचेतनसम्बन्धिनः, तत्र मनुष्याणां ब्राह्मणराजन्यादीनाम्, हस्त्यश्वादीनाममनुष्याणां इत्येवम् । एवमपर्यन्तार्थभेदवशेन भिद्यमानानां शब्दानां विशेषेण इयत्यो विधा इत्यवधारणमशक्यम् ॥

यस्मादेवं, तस्मात् तादृशविभागानुसारेणेह शब्दनिरूपणं न क्रियते । किं तु—

**वक्रवाचां कवीनां ये प्रयोगं प्रति साधवः ।**
**प्रयोक्तुं ये न युक्ताश्च तद्विवेकोऽयमुच्यते ॥ २३ ॥**

सामान्यव्यवहारे शब्दानां साधुत्वासाधुत्वे अन्यादृशे । अन्यादृशे च कवीनां वाचि । ते हि रससम्पत्तये शब्देऽर्थे च वक्रिमाणमाश्रयन्ति ।

तेन तदनुगुणं साधु भवति अननुगुणमसाध्विति । प्रयोगं प्रति प्रयोगापेक्षया । न युक्ताः असाधव इत्यर्थः ॥ २३ ॥

अथ अष्टत्रिंशता श्लोकैः साध्वसाधुविवेकः ॥—

नाप्रयुक्तं प्रयुञ्जीत चेतःसम्मोहकारिणम् ।
तुल्यार्थत्वेऽपि हि ब्रूयात् को हन्ति गतिवाचिनम् ॥ २४ ॥

अप्रत्यायकत्वात् पूर्वैरप्रयुक्तं न प्रयोक्तव्यम् । यथा गृहान् गच्छतीत्यत्र गृहान् हन्तीति । तुल्यार्थौ हि गमिर्हन्तिश्च । गम्लृ गतौ, हनहिंसागत्योरित्युभयोर्गत्यर्थस्मरणात् । अथापि गमेरिव हन्तेर्गत्यर्थे नास्ति वचनम् । तत् कस्मात् । पूर्वैरप्रयुक्तत्वादेव । तस्मात् तद्वदेव अन्यदप्यप्रयुक्तं कसति फणतीत्यादिकं न प्रयोक्तव्यमिति ॥ २४ ॥

श्रौत्रादिं न तु दुर्बोधं न दुष्टादिमपेशलम् ।
ग्राम्यं न पिण्डीशूरादिं न डित्थादिमपार्थकम् ॥ २५ ॥

न तु नैव । दुरवगमत्वात् श्रौत्रादिं सुसूक्ष्मव्याकरणप्रक्रियागम्यं न प्रयुञ्जीत । 'हायनान्तयुवादिभ्योऽण्' इति सूत्रस्थेन 'श्रोत्रियस्य यलोपश्च' इति वार्तिकेन श्रोत्रियस्य भावः कर्म वेत्यर्थे श्रोत्रियशब्दादण्प्रत्यये यलोपे 'यस्येति च' इति इकारलोपे 'तद्धितेष्वचामादेः' इति आदिवृद्धौ 'श्रौत्रं' इति रूपम् । अहृद्यत्वात् दुष्टादिं न प्रयुञ्जीत । यथा दुष्टवटुकेति । ग्राम्यत्वात् पिण्डीशूरादिं न प्रयुञ्जीत । पात्रेसमितादिगणान्तर्गतः पिण्डीशूरशब्दः । गेहेशूर इत्येव तदर्थ इति केचित् । अपूपशूर इत्यन्ये । अर्थशून्यत्वात् डित्थादिं न प्रयुञ्जीत । सति सम्भवे अर्थवत्प्रयोगस्यैवोचितत्वात् । तथैव सति पदसंस्कारसम्पत्तेरिति ॥ २५ ॥

नाप्रतीतान्यथार्थत्वं धात्वनेकार्थतावशात् ।
न लेशज्ञापकाकृष्टं स हन्ति ध्याति वा यथा ॥ २६ ॥

अन्यथा अन्यादृशः अर्थः यस्य सोऽन्यथार्थः तस्य भावोऽन्यथार्थत्वम् । अर्थान्तरवाचित्वमित्यर्थः । अप्रतीतं अप्रसिद्धं अन्यथार्थत्वं यस्य तं शब्दं

न प्रयुञ्जीत, तस्य धातोरनेकार्थत्वं धातुपरायणे पठितमित्येतावन्मात्रेण । लिश्यते अल्पीभवतीति लेशः स चासौ ज्ञापकश्च तेन आकृष्टं हठान्निष्पादितं च शब्दं न प्रयुञ्जीत । आद्यो यथा—स हन्तीति । हनहिंसागत्योरित्यनेकार्थत्वं हन्तेः श्रूयते । तत्र हिंसार्थत्वं प्रसिद्धम् । गतिरूपार्थान्तरवाचित्वं त्वप्रसिद्धम् । एवमप्रसिद्धार्थवाचितयाऽयं शब्दः प्रयुज्यमानोऽसाधुरिति । प्रपूर्वश्लोके दृष्टान्तमात्रतया एतत्कथनमिति विभाव्यम् । 'संइति' इति तु पठ्यमानं न बुद्ध्यामहे । द्वितीयो यथा—ध्यातीति । ध्यै चिन्तायामिति धातुः । अस्मात् तिपि शपि आयादेशे ध्यायतीति रूपम् । तत्र 'तनादिकृञ्भ्य उः' इत्यत्र तनादित्वादेव कृञोऽप्युप्रत्यये सिद्धे तस्य पुनः पृथग्ग्रहणं गणकार्यस्यानित्यत्वं ज्ञापयति । तेन 'अदिप्रभृतिभ्यः शपः' इति विहितस्य लुकोऽभावे अदाद्यन्तर्गतश्वसधातोर्लिङि श्वसेदिति रूपं सिद्ध्यति । 'न विश्वसेदविश्वस्तं' इत्यादौ यथा । तदेतत् प्रसिद्धं वैयाकरणकुले । एतद्दर्शी कश्चिद्यदि यथा विहितः शपो लुक् कचिन्न भवति तथाऽविहितोऽपि कचिद्भवतीति कृत्वा ध्यैधातोस्तिपि 'आदेच उपदेशेऽशिति' इति ऐकारस्याकारे 'ध्याति' इति प्रयुञ्जीत, तदसाध्विति यथाप्रतिभं व्याख्यातम् ॥ २६ ॥

**न शिष्टैरुक्तमित्येव न तन्त्रान्तरसाधितम् ।**
**छन्दोवदिति चोत्सर्गान्न चापि च्छान्दसं वदेत् ॥ २७ ॥**

उक्तं वक्ष्यमाणमन्यद्वा यदसाधु तत् शिष्टैरुक्तमित्येतावता साध्विति कृत्वा न प्रयोक्तव्यम् । नापि व्याकरणान्तरेण साधितं प्रयोक्तव्यम् । यथा 'फलेग्रहिरात्मम्भरिश्च' इति पाणिनिना आत्मम्भरिशब्दमात्रेऽनुशिष्टे 'आत्मोदरकुक्षिषु' इति चान्द्रव्याकरणमनुसृत्य 'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' इत्युदरम्भर्यादिशब्दः । 'छन्दोवत् सूत्राणि भवन्ति' इति पतञ्जलिश्छान्दसानामपि रूपाणां लौकिकग्रन्थेषु प्रयोगमनुमन्यते । तत्र यद्यपि सूत्राणी-

त्याह तथाऽपि प्रौढग्रन्थसामान्यस्य तदुपलक्षणमिति कृत्वा छान्दसप्रयोगो न कर्तव्य इत्यभिप्राय इति कैश्चिदुक्तम् । वस्तुतस्तु 'छन्दोवत् कवयो वदन्ति' इति कवीन् प्रत्येव 'यूस्त्र्याख्यौ नदी' इति सूत्रे महाभाष्ये उक्तमिति तदेवेहाभिसंहितमिति ज्ञेयम् ॥ २७ ॥

एवं निषेधेनोक्तमर्थं विधिमुखेन सङ्कलयन्नाह—

**क्रमागतं श्रुतिसुखं शब्दमर्थ्यमुदीरयेत् ।**
**अतिशेते ह्यलङ्कारमन्यं व्यञ्जनचारुता ॥ २८ ॥**

क्रमागतमित्यनेन अप्रयुक्तदुर्बोधाप्रतीतान्यथार्थत्वज्ञापकाक्लिष्टानां निरासः । श्रुतिसुखमिति ग्राम्यापेशलयोः । अर्थ्यमित्यपार्थस्य । कुत इयान्निर्भर इह प्रदर्श्यत इति चेदुच्यते । व्यञ्जनानां वर्णानाम् । शब्दस्वरूपस्येति यावत् । चारुता उक्तवक्ष्यमाणदोषराहितता अन्यं यमकरूपकादिं शब्दार्थालङ्कारमतिशेते हि । प्रथमप्रतीतं हि शब्दस्वरूपम् । तत्र श्रोतृणामुद्वेगे सति अलङ्कारान्तरं विद्यमानमपि चमत्काराय न कल्पेत । अनुद्वेगकारिणा शब्देन तु अक्लेशमर्थे गृहीते काव्यं रोचेततरामिति ॥ २८ ॥

**सिद्धो यश्चोपसंख्यानादिष्ट्या यश्चोपपादितः ।**
**तमाद्रियेत प्रायेण न तु योगविभागजम् ॥ २९ ॥**

पाणिनिसूत्रेणासिद्धा अपि शब्दाः भाष्यवार्तिककृद्भ्यां 'शकलकर्दमाभ्यामुपसंख्यानम्' 'शकलकर्दमाभ्यामणपीष्यते' 'द्विपर्यन्तानामेवेष्टिः' इत्येवं उपसंख्यानेच्छार्थपदघटितैर्वचनैः साधिताः । केचन शब्दा योगविभागजाः योगस्य सूत्रस्य विभागेन निष्पादिताः । तत्र उपसंख्यानादिना साधिताः शब्दाः कामं प्रयोगार्हाः । योगविभागजास्तु सर्वथा न प्रयोक्तव्याः ॥ २९ ॥

यथा—

**इयं चन्द्रमुखी कन्या प्रकृत्यैव मनोहरा ।**
**अस्यां सुवर्णालङ्कारः पुष्णाति नितरां श्रियम् ॥ ३० ॥**

'कर्तृकरणयोस्तृतीया' इति सूत्रे 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वचनात् 'प्रकृत्यैव मनोहरा' इति प्रकृतिशब्दात् तृतीया । 'सङ्घातविकारषष्ठ्याश्चोत्तरपदलोपश्च' इति वचनेन सुवर्णस्य विकारोऽलङ्कारो यस्य स सुवर्णालङ्कार इति सिद्धेरेतदपि पदमिहोदाहरणं भवितुमर्हति । किं तु अलङ्कारस्यैवात्र प्राधान्यमिष्यते नान्यपदार्थस्येति बहुव्रीह्ययोगात् तस्योदाहरणत्वानुपपत्तिर्भाति ॥ ३० ॥

एवं सामान्यतो वक्तव्यमुक्त्वा, अथ विशेषेण विवक्षन् भगवता पाणिनिना प्रथमसूत्रे मङ्गलार्थमादौ प्रयुक्तं वृद्धिशब्दं स्वयमपि प्रयुञ्जानः वृद्धिकार्यवन्तं शब्दविशेषमादरणीयतयोपदिशति—

वृद्धिपक्षं प्रयुञ्जीत संक्रमेऽपि मृजेर्यथा ।
मार्जन्त्यधररागं ते पतन्तो बाष्पबिन्दवः ॥ ३१ ॥

गुणवृद्धिप्रतिषेधप्रयोजकस्य कितो ङितश्च प्रत्ययस्य संक्रम इति प्राचां वैयाकरणानां संज्ञा । अदाद्यन्तर्गतस्य मृजू शुद्धौ इति धातोः प्रत्यये परे वृद्धिर्विधीयते 'मृजेर्वृद्धिः' इति । अत्र 'क्ङित्यजादौ वेष्यते' इति इष्ट्या अजादौ किति ङिति च प्रत्यये परे वृद्धेर्विकल्पो भवति । तेनास्माद्धातोः 'झि' इति प्रथमपुरुषबहुवचने कृते 'झोऽन्तः' इति झकारस्यान्तादेशे अजादित्वात् 'सार्वधातुकमपित्' इत्यनेन ङित्त्वाच्च वृद्धिपक्षे 'मार्जन्ति' इति, तदभावपक्षे मृजन्ति इति च रूपं भवति । तत्र वृद्धिपक्ष एव कविभिरादरणीयः । यथा मार्जन्तीत्यादि । रुदन्तीं प्रति नायकस्येदं वचनमिति ॥

मत्तः स्मृतिर्ज्ञानमपोहनं चेत्याह स यत्पार्थरथोपविष्टः ।
पदे पदे तत्प्रथयन् यथार्थं स देवदेवो हृदि मे विभाति ॥ ३२ ॥

अथ द्वितीयपादगतं कञ्चन विशेषमाह—

सरूपशेषं तु पुमान् स्त्रिया यत्र च शिष्यते ।
यथाऽऽह वरुणाविन्द्रौ भवौ शर्वौ मृडाविति ॥ ३२ ॥

'पुमान् स्त्रिया' इति प्रथमाध्याये द्वितीयपादे सप्तषष्टितमं सूत्रम् । स्त्रिया सहोक्तौ पुमान् शिष्यत इति तदर्थः । एवं यत्र विधीयते तं सरूपशेषं प्रयुञ्जीतेति योजना । इन्द्रस्य स्त्री वरुणस्य स्त्री इत्यादिविवक्षायां 'इन्द्र-वरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' इति सूत्रेण आ-नुगागमे ङीप्प्रत्यये च इन्द्राणी वरुणानी भवानीत्यादि भवति । तत इन्द्राणी चेन्द्रश्च वरुणानी च वरुणश्च इति द्वन्द्वविवक्षायां उक्तसूत्रेण इन्द्रौ वरुणावित्येकशेषो भवतीति ॥ ३२ ॥

अस्मिन्नेव पादे प्रातिपदिकसंज्ञायाः 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति विधीयमानत्वात् तद्घटितविधिविशेषप्राप्तं प्रदर्शयति—

**यथा पटयतीत्यादि णिच् प्रातिपदिकात् ततः ।**
**णाविष्ठवदितीष्ट्या च तथा क्रशयतीत्यपि ॥ ३३ ॥**

इत्यादीति सामान्ये नपुंसकम् । णिजित्येतदेव वा नपुंसकम् । इत्यादिर्णि-जिति वा पाठः । इत्यादिणिजित्येकं पदं वा । प्रातिपदिकाद्यथा पट-यतीत्यादिरूपो णिच् तथा णाविष्ठवदितीष्ट्या क्रशयतीति रभावोऽपि भव-ति । एवमपि प्रयुञ्जीतेति भावः । 'हेतुमति च' इति सूत्रस्थमिदं वार्तिकं 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति । अत्रेयं वृत्तिः— 'प्रातिपदि-काद्धात्वर्थे णिच् स्यात् । इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावादयस्तद्वत् णावपि स्युः । पटुमाचष्टे पटयति' इति । इष्ठ इति । 'अतिशायने तमबिष्ठनौ' इति विहित इष्ठन्प्रत्यय इत्यर्थः । 'र ऋतो हलादेर्लघोः' इति सूत्रेण च इष्ठन्प्रत्ययादिषु परेषु हलादेर्लघोः ऋकारस्य रभावो विहितः । तेन कृशशब्दाण्णिचि ऋकारस्य रभावे क्रशयतीति रूपम् ।

यद्यपि 'पुमान्स्त्रिया' इति सूत्रात् प्रातिपदिकसंज्ञाविधायकसूत्रं पूर्वं पठ्यत इति एकशेषकथनात् प्राक् एतत्कथनं न्याय्यं तथाऽपि मार्जन्ति मृज-न्ति इत्यनेकरूपवत् इन्द्र इन्द्राणीत्यनेकरूपस्य प्रथममुपस्थितत्वात् क्रमान्तरा-

श्रयणमिति मन्तव्यम् । यद्वा सूत्रस्य प्रथमं स्थानं पश्चाद्वार्तिकस्येति ॥ ३३ ॥

अथ द्वितीयाध्यायविषयः । तत्रादौ अव्ययीभावसमासः । तद्विषयमिदं सूत्रं 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति । 'अदन्तादव्ययीभावात् सुपो न लुक्; तस्य पञ्चमीं विना अमादेशः' इति तदर्थः । 'अपदिशम्' इतीहोदाहरणम् । दिशयोर्मध्यमिति तदर्थः । अत्रैव सूत्रान्तरम्—'तृतीयासप्तम्योर्बहुलम्' इति । अदन्तादव्ययीभावात् तृतीयासप्तम्योर्विकल्पेनाम्भावः स्यादित्यर्थः । अपदिशं अपदिशेन; अपिदिशं अपदिशे । इत्युदाहरणम् । अपञ्चम्या इति पूर्वसूत्रे पर्युदासेन पञ्चम्या अम्भावाभावात् अपदिशादिति भवति । तथा च पञ्चम्या अम् नित्यं न भवति । तृतीयासप्तम्योर्विकल्पेन भवति । अन्यासां विभक्तीनां नित्यं भवतीति त्रैविध्यम् । तत्र तृतीयासप्तमीतरविभक्त्यादेशामन्तं काव्ये प्रयोक्तुमुचितम् । अंरहिता पञ्चमी न प्रयोज्या । तृतीयासप्तम्यौ अम्भावरहिते एव प्रयोज्ये इत्याह—

प्रयुञ्जीताव्ययीभावमदन्तं नाप्यपञ्चमी ।
तृतीयासप्तमीपक्षे नालुग्विषयमानयेत् ॥ ३४ ॥

अदन्तमव्ययीभावं प्रयुञ्जीत । नाप्यपञ्चमी । अपि अपित्वित्यर्थः । अपञ्चमीति 'अपञ्चम्याः' इति सूत्रोक्तपर्युदासं गृहीत्वा तद्विषयीभूतं पञ्चम्यन्तं लक्ष्यते । पर्युदस्ताम्भावं पञ्चम्यन्तमव्ययीभावं न प्रयुञ्जीतेत्युक्तं भवति । अलुक् विषयो निमित्तं यस्य सोऽम् अलुग्विषयः तं, तृतीयासप्तमीपक्षे विभक्त्यन्तरं विहाय तृतीयासप्तम्याश्रयण इत्यर्थः नानयेत् न प्रयुञ्जीत । इति स्थितस्य गतिः ।

प्रयुञ्जीताव्ययीभावमदन्तादम्यपञ्चमि ।
तृतीयासप्तमीपक्षं नामो विषयमानयेत् ॥

इत्येवंविधेन पाठान्तरेण भवितुं युक्तमिति प्रतिभाति ॥ ३४ ॥

अव्ययीभाव एव विशेषान्तरम्—

अव्ययीभाव एव विशेषान्तरम्—

तिष्ठद्गुप्रभृतौ वाच्यौ नक्तंदिवसगोचरौ ।
यथा विद्वानधीतेऽसौ तिष्ठद्गु च वहद्गु च ॥ ३५ ॥

तिष्ठद्गुप्रभृतौ 'तिष्ठद्गुप्रभृतीनि च' इति सूत्रोपात्ते तिष्ठद्ग्वादिगणे यौ यथाक्रमं नक्तंदिवसवाचिनौ तिष्ठद्गुवहद्गुशब्दौ तौ प्रयोज्यावित्यर्थः । तिष्ठन्ति गावोऽस्मिन् काल इति तिष्ठद्गु । एवं वहन्ति चरन्ति गावोऽस्मिन्निति वहद्गु ॥ ३५ ॥

एवं प्रथमपादे किञ्चिदुक्त्वा द्वितीयपादे आह—

शिष्टप्रयोगमात्रेण न्यासकारमतेन वा ।
तृचा समस्तषष्ठीकं न कथंचिदुदाहरेत् ॥ ३६ ॥
सूत्रज्ञापकमात्रेण वृत्रहन्ता यथोदितः ।

'जनिकर्तुः प्रकृतिः' इति सूत्रे भगवता पाणिनिना जनेः कर्ता जनिकर्तेति तृजन्तेन षष्ठीसमास आश्रित इति तदेव एवंविधे समासे ज्ञापकमिति कृत्वा तावन्मात्रेण, अन्येषां शिष्टानां प्रयोगमात्रेण, न्यासनाम्नो व्याकरणग्रन्थस्य कर्तुः एतं समासं समर्थयतः प्राचो मतावष्टम्भमात्रेण च 'वृत्रहन्ते'त्यादिरूपं तृचा समस्तषष्ठीकं कथमपि न प्रयुञ्जीत । 'तृजकाभ्यां कर्तरि'इति स्पष्टमस्य समासस्य निषेधात् । श्रुतिलिङ्गयोः श्रुतेः प्राबल्यात् ॥

तृज्विषये उक्तं अकविषयेऽप्याह—

अकेन च न कुर्वीत वृत्तिं तद्गमको यथा ॥ ३७ ॥

'तत्प्रयोजको हेतुश्च' इति सूत्रज्ञापकमात्रेण 'दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्ध'मिति वार्तिकप्रयोगादिना च अकेन च समासं न कुर्वीत । यथा तस्य गमकः तद्गमक इति ॥ ३७ ॥

अथ चतुर्थपादस्थं किंचित्—

पञ्चराजीति च यथा प्रयुञ्जीत द्विगुं स्त्रियाम् ।
नपुंसकं तत्पुरुषं पुरुहूतसभं यथा ॥ ३८ ॥

द्विगुं च स्त्रियां प्रयुञ्जीत । यथा पञ्चराजीति । पञ्चानां राज्ञां समाहार इति संख्यापूर्वत्वादयं द्विगुः । अत्र 'अतो नलोपश्च वा द्विगुः स्त्रियाम्' इति वार्तिकेन नलोपे, वैकल्पिके स्त्रीत्वे 'द्विगोः' इति ङीपि पञ्चराजीति रूपम् । 'सभा राजाऽमनुष्यपूर्वा' इति सूत्रेण पुरुहूतसभमिति नपुंसकत्वम् ॥ ३८ ॥

अथ तृतीयाध्यायविषयः—

**सर्वेभ्यश्च भृशादिभ्यो वदेल्लुप्तहलं यथा ।**
**प्रियोन्मनायते सा ते किं शठाभिमनायसे ॥ ३९ ॥**

'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' इति प्रथमपादे सूत्रम् । अत्र वृत्तिः 'अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्यात् । हलन्तानामेषां लोपश्च । अभृशो भृशो भवति भृशायते' इति । अस्मिन् भृशादिगणे अभिमनस् उन्मनस् इत्येतावपि शब्दौ पठ्येते । ताभ्यां क्यङि अन्त्यस्य हलो लोपे च अभिमनायते उन्मनायते इति भवति । तदिदं द्वयमुदाहरति प्रियेति । सा ते प्रिया पर्युत्सुका भवति । हे गूढविप्रियकारिन् अयुक्तकारिन् कुतोऽभिमानवान् भवसि ; तां प्रति अनुकम्पामृदुहृदयो न भवसीति ॥ ३९ ॥

अथ द्वितीयपादस्थं किंचिदाह—

**तृतीयैकवचः षष्ठ्यामामन्तं च वदेत् क्विपि ।**
**यथोदितं बलभिदा सुरुचां विद्युतामिव ॥ ४० ॥**

तृतीयैकवचस उदाहरणं बलभिदेति । 'क्विप्च' इति क्विप् । रुगित्यत्र 'अन्येभ्योऽपि दृश्यते' इत्यनेन क्विप् । 'भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप्' इत्यनेन विद्युदिति । पदमात्रमिहोदाहृतं न वाक्यमिति ज्ञेयम् ॥ ४० ॥

उदाहृते 'भ्राजभासे'ति सूत्रे भासतेरप्युपादानात् तस्यासन्तत्वेनान्येषामप्यसन्तानामुपस्थितेराह—

असन्तमपि यद्वाक्यं तत् तथैव प्रयोजयेत् ।
यथोच्यतेऽम्भसा भासा यशसामम्भसामिति ॥ ४१ ॥

वाक्यमिति पदस्यैवेह ग्रहणम् । तस्याप्युच्यमानत्वात् । तथैव तृतीयैकवचनान्ततया षष्ठ्यामामन्ततया च । 'उदके नुम्भौ च' इत्यौणादिकेन सूत्रेण अम्भ इति 'अशेर्देवने युट् च' इत्यनेन यश इति च सिद्ध्यति । यद्यपि 'उणादयो बहुलम्' इति सूत्रं तृतीयपादस्थं तथाऽपि असन्तत्वेनोपस्थितत्वात् तथैवेत्यतिदेशसौकर्याच्चौणादिकस्याप्यत्र प्रदर्शनमिति बोध्यम् ॥

द्वितीयपाद एव सूत्रान्तरविषयं किञ्चित्—

पुंसि स्त्रियां च क्वस्वन्तमिच्छन्त्यच्छान्दसं किल ।
उपेयुषामपि दिवं यथा न व्येति चारुता ॥ ४२ ॥

'क्वसुश्च' इति छन्दसि लिटः क्वसुर्विधीयते । अथाप्यस्य पुल्लिङ्गे स्त्रीलिङ्गे चाच्छान्दसत्वमिच्छन्ति । किलेति स्वस्यानास्था । तत्र पुंसि यथा— दिवमुपेयुषामपि चारुता शोभनकाव्यनिर्माणादिजनिता कीर्तिः श्लाघ्यता नापैति । अत्रोपेयुषामिति उपपूर्वात् इणो भूतमात्रे लिटि तस्य क्वसुरिति । इदं खलु बोध्यम् । —छान्दसतया क्वसोर्विधानानन्तरं 'भाषायां सदवसश्रुवः' इति लोके सदादिभ्यः क्वसुं विधाय तदनन्तरं लोकविषयमेव 'उपेयिवाननाश्वाननूचानश्च' इत्युपपूर्वादिणोऽपि क्वसोरनुशासनं कृतं दृश्यते । तदस्येहोदाहरणमयुक्तमिति 'आतस्थुषामपि दिवम्' इत्येवमादिरीत्या पठित्वोदाहर्तव्यमिति ॥ ४२ ॥

अथ स्त्रियां यथा—

इभकुम्भनिभे बाला दधुषी कञ्चुकं स्तने ।
रतिखेदपरिश्रान्ता जहार हृदयं नृणाम् ॥ ४३ ॥

नवसङ्गमानन्तरं शय्यागृहान्निर्गतां प्रति सखीप्रभृतीनां जनानां जातां प्रीतिं श्रुत्वा प्रतिपादयतो वचनमिदम् । इभकुम्भनिभे स्तने कञ्चुकं धारितवती । दधुषीत्युदाहरणम् । दधातेर्लिटि क्वसौ स्त्रीत्वम् ॥ ४३ ॥

णिज्विषये किञ्चिदाह—

शबलादिभ्योऽतितरां भाति णिज्विहितो यथा ।
बलाकाः पश्य सुश्रोणि घनाञ्छबलयन्त्यमूः ॥ ४४ ॥

'शपेर्बश्च' इत्युणादिसूत्रेण शबलशब्दसिद्धिः । ततः 'तत्करोति तदाचष्टे' इति वार्तिकेन णिचि शबलयतीति । एवं शबलादिभ्यः परं प्रयुक्तो णिच् णिजन्तरापेक्षयाऽतितरां भाति । यथा--हे सुश्रोणि अमूर्बलाकाः कृष्णान् मेघान् स्ववर्णेन विचित्रवर्णाः कुर्वन्ति पश्य ॥ ४४ ॥

यथा च—

शिशिरासारकणिकासदृशः सेतुगन्धवाट् ।
त्वां बीजयति सुश्रोणि रतिखेदालसेक्षणाम् ॥ ४५ ॥

बीजयतीत्युदाहरणम् । शिशिर आसारः अम्बुपातः तत्सम्बन्धिन्यः कणिकाः तासां सदृशः शैत्यमान्द्यसौक्ष्म्यादिभिस्तत्तुल्यः सेतुगन्धवाट् मलयमारुतः । रतिश्रमेण सामिनिमीलितनयनां त्वां बीजयतीति । सेतुगन्धवाडित्यत्र दृश्यमानोऽपपाठो निर्देशमपि नार्हतीति ज्ञेयम् ॥ ४५ ॥

णिज्विषयमुपसंहरन्नाह—

एवं णिचः प्रयोगस्तु सर्वत्रालंकृतिः परा ।

एवं शबलयत्यादितुल्यम् । यथा यथा काव्यस्य शोभा भवेत् तथा तथा सर्वमवधाय प्रयोक्तव्यमिति हृदयम् । प्रथमपादीयणिज्विषयमेतत् सार्धश्लोकद्वयं भृशादिश्लोकादनन्तरं पाठितुमुचितम् । इह पाठो लेखकप्रमादनिबन्धन इति प्रतिभाति ।

अथ द्वितीयपादस्थं णिनिं प्रत्याह—

लिङ्गत्वोपपन्नं च ताच्छील्यविषयं णिनिम् ॥ ४६ ॥

इच्छन्तीत्यनुषज्यते । उक्तरीत्या णिज्विषयस्य सार्धश्लोकद्वयस्य भृशादिश्लोकानन्तरं निवेशने क्वसुश्लोकस्थं इच्छन्तिपदं सुखमिहानुषञ्जयितुं शक्यत इत्येतदपि दृश्यमानस्य क्रमस्य प्रामादिकत्वे क्रमान्तरस्यावश्यकत्वे च

लिङ्गम् ॥ ४६ ॥

यथा—

तस्या हारी स्तनाभोगो वदनं हारि सुन्दरम् ।
हारिणी तनुरत्यन्तं कियन्न हरते मनः ॥ ४७ ॥

त्रिष्वपि लिङ्गेषु हारिशब्द इह प्रयुक्तः । सुन्दरत्वात् हारि । हारिशब्दार्थस्पष्टीकरणायैव कियन्न हरते मन इति । अत्र मीमांसन्ते । हरतेर्णिनिः केन शास्त्रेण विधीयते । न तावत् 'सुप्यजातौ णिनिस्ताच्छील्ये' इत्यनेन । सुबन्तोपपदापेक्षित्वात् । अत एव न 'बहुलमाभीक्ष्ण्ये' इत्यनेनापि । ताच्छील्यार्थत्वानुपपत्तेश्च । एतेन 'आवश्यकाधमर्ण्ययोर्णिनिः' इति णिनुसिद्धिरिति भट्टिकाव्यव्याख्यानकृता केनचिदुक्तमत्र न सङ्गतमिति वेदितव्यम् । यत्त्वन्येनोक्तं ग्रहादित्वात् 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इत्यनेन तत्सिद्धिरिति तदपि चिन्त्यमेव । ताच्छील्यार्थे तत्र विध्यभावात् । अव्याहारी, असंव्याहारी, अहारी, इति नञुपसर्गविशिष्टस्यैव तस्मिन् गणे पाठात् । पचादिवत् ग्रहादेराकृतिगणत्वानभिधानात् । द्वितीयपादीयप्रकरणस्थत्वेन प्रथमपादस्थनन्द्यादिशास्त्रप्राप्तणिनिपरतया वर्णनस्य ग्रन्थकाराभिप्रायविरुद्धत्वाच्चेति । तत्रैवं वाच्यम् । 'उणादयो बहुलम्' 'कृत्यल्युटो बहुलम्' इत्यसकृत् कृत्प्रकरणे भगवान् पाणिनिर्बहुलग्रहणं करोति । तत्तन्मात्रपरं न ग्राह्यम् । किन्तु सर्वेषामेव कृतां सर्वोपाधिव्यभिचारार्थमिति । तेन 'सुप्यजातौ' इत्यादिना विहितो णिनिः सुबुपपदाभावेऽपि हारीत्यादौ ताच्छील्ये भवति । 'बहुलमाभीक्ष्ण्ये' इत्यत्र वा बहुलग्रहणं सुबुपपदाभावेऽपि ताच्छील्येऽपि णिनिर्भवतीत्येतदर्थमिति । 'तवास्मि गीतरागेण हारिणा ....' इति महाकविना 'हारिण्यबलानां हारिण्यबलानां' इति चित्रसर्गे व्याकरणं प्राज्ञेन भट्टिना च प्रयुक्तस्य हारिशब्दस्य समर्थनमेवं क्रियमाणं काममभिनन्दनीयं विदुषाम् । 'न शिष्टैरुक्तमि-

त्येव' 'शिष्टप्रयोगमात्रेण' 'न लेशज्ञापकाकृष्टम्' इत्यादि अभिनिविश्य कथयन्नाचार्यभामहः पुनः अत्र साक्षात् प्रतिषेधमकुर्वन् अर्धसम्मतिमेव करोतीति प्रतीयते । अत एवानादरसूचकं किलेत्येतदपि इच्छन्तीतिवत् क्सुश्लोकादिहानुषज्यत एवेति । सुवुपपदकं वोदाहार्यम् ॥ ४७ ॥

द्वितीयपाद एव प्रत्ययान्तराणि—

**ताच्छील्यादिषु चेष्यन्ते सर्व एव तृनादयः ।**
**विशेषेण च तत्रेष्टा युच्कुरज्वरजिष्णुचः ॥ ४८ ॥**

'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' 'तृन्' इत्युपक्रम्य बहवः प्रत्यया विधीयन्ते । तदन्ताः सर्व एव शब्दाः कवीनां प्रयोगं प्रति साधवः । तत्र विशेषेण युजादय इष्टाः । 'चलनशब्दार्थादकर्मकाद्युच्' इत्यादिभिश्चतुर्भिःसूत्रैर्युज्विधीयते । चलनः कम्पनः वर्तनः वर्धनः जवनः क्रोधनः मण्डनः इत्याद्या युजन्ताः । 'विदिभिदिच्छिदेः कुरच्' इति विदुरः भिदुरः छिदुरः इत्यादौ कुरच् । 'स्थेशभासपिसकसो वरच्' इति स्थावरः ईश्वरः भास्वर इत्यादौ वरच् । 'अलंकृञ् निराकृञ्' इत्यादिना सूत्रेण अलङ्करिष्णुः निराकरिष्णुः इत्यादौ इष्णुच् । प्रथमनिर्देश्यस्यापि इष्णुचो वृत्तानुरोधादन्ते निर्देशः । तृनादय इत्यत्र 'ङमो ह्रस्वादचि ङमुण्णित्यम्' इति ङमुण्ण भवति । सनाद्यन्ता धातवः उणादयो बहुलमित्येवमाद्यनुरोधात् ॥ ४८ ॥

अथ तृतीयपादविषयः—

**क्तिन्नन्तं च प्रयुञ्जीत सङ्गतिः संहतिर्यथा ।**
**शाकारौ जागुरिष्टौ च जागर्या जागरा यथा ॥ ४९ ॥**

पूर्वमर्धमतिस्पष्टम् । 'जागृ' इति ऋकारान्तस्य पञ्चम्येकवचनं जागुरिति । शकारश्च अकारश्च उभौ अस्मादिष्टौ । 'इच्छा' इति सूत्रे 'जागर्तेरकारो वा' इति वार्तिकम् । अकाराभावपक्षे शः । अस्मिन् परे यक् भवति । उभयत्र स्त्रीत्वेऽदन्तत्वाट्टाप् । तत्र अकारे जागरेति रूपम् । शप्रत्यये जागर्येति ॥ ४९ ॥

'ण्यासश्रन्थो युच्' इति सूत्रविहितं युचमाह—

**उपासनेति च युचं नित्यमासेः प्रयोजयेत् ।**

आसेः आस उपवेशने इति धातोः ।

ल्युड्विषयमाह—

**ल्युटं च कर्तृविषयं देवनो रमणो यथा ॥ ५० ॥**

प्रयोजयेदित्यनुषङ्गः । कृत्यल्युटो बहुलमिति ल्युटः कर्तृविषयत्वमपि भवतीति ॥ ५० ॥

एतावत् तार्तीयम् । अथ चतुर्थाध्यायगतम् । तत्र प्रथमपादीय 'टिड्ढाणञ्' सूत्रस्थमाह—

**अणन्तादपि ङीविष्टो लक्ष्मीः पौरन्दरी यथा ।**

पुरन्दरस्येयमित्यर्थे 'तस्येदं' इत्यणि ङीप् ।

अथ द्वितीयपादीयम्—

**अञ् महारजनाल्लाक्षारोचनाभ्यां तथा च ठक् ॥ ५१ ॥**

'लाक्षारचनाट्ठक्' इति सूत्रम् । समाहारादेकत्वम् । आभ्यां विहितष्ठक् तथा इष्टः । लाक्षिकः रौचनिकः इति । अत्र महारजनादञ्च इष्यते माहारजनमिति ॥ ५१ ॥

**ड्मतुबिष्टं च कुमुदाद्यर्थेयं भूः कुमुद्वती ।**

'कुमुदनडवेतसेभ्यो ड्मतुप्' इति सूत्रम् । अनेन कुमुदशब्दात् ड्मतुपि डित्वात् 'टेः' इति टिलोपे 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति मस्य वत्वे 'उगितश्च' इति ङीपि कुमुद्वती ॥

अथ तृतीयमतिलंघ्य चतुर्थपादगतमाह—

**ठक् चापि तेन जयतीत्याक्षिकः शास्त्रिको यथा ॥ ५२ ॥**

इष्ट इत्यनुषङ्गादिना सम्बध्यते । प्रत्ययानां पुंनपुंसकत्वमनियमेन स्थितम् । 'तेन दीव्यति खनति जयति जितम्' इति सूत्रस्यैकदेश इहोपात्तः 'तेन जयती'ति । अक्षैर्जयति आक्षिकः । शस्त्रेण जयति शास्त्रिकः ॥ ५२ ॥

इति चतुर्थाध्यायस्य विषयः । अथ पञ्चमाध्यायस्य–

**हितप्रकरणे णं च सर्वशब्दात् प्रयुञ्जते ।**
**ततश्छमिष्ट्या च यथा सार्वः सर्वीय इत्यपि ॥ ५३ ॥**

'तस्मै हितं' इति सूत्रादारभ्य प्रवृत्तं हितप्रकरणम् । तत्र विहितं णप्रत्ययं सर्वशब्दात् प्रयुञ्जते । अत्रोदाहरणं सार्व इति । 'सर्वपुरुषाभ्यां णढञौ' इति सूत्रम् । यथासंख्यत्वात् सर्वशब्दाण्णः । अत्र णकारस्य इत्त्वेन लोपे सर्व अ इति स्थिते 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यस्येति च' इति वकारोत्तराकारलोपे च सार्व इति भवति । अत्र वार्तिकं 'सर्वाण्णो वेति वक्तव्यम्' इति । तेन णस्य विकल्पः । तदभावपक्षे च 'प्राक्क्रीताच्छः' इति विहितश्छप्रत्ययो भवति । तत्र छकारस्य 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इत्यनेन ईयादेशे सर्वीय इति भवति । तदेतदुक्तं 'ततश्छमिष्ट्या च सर्वीय इत्यपि' इति । ततः सर्वशब्दात् इष्ट्या छं च प्रयुञ्जते । यथा सर्वीय इति । इति योजना ॥ ५३ ॥

'पृथ्वादिभ्य इमनिज्वा' इति सूत्रविहितमाह–

**वदेदिमनिजन्तं च पटिमा लघिमा यथा ।**
त्वतलावपेक्ष्य इमनिच् श्रेयानित्यभिसन्धिः ॥

एतावत्प्रथमपादीयम् । अथ तृतीयं पादं गत्वाऽऽह–

**विशेषणेयसुन्निष्टो ज्यायानपि कनीयसीम् ॥ ५४ ॥**

'द्विवचनविभज्योपपदे तरबीयसुनौ' इति विहित ईयसुन् विशेषणेष्यते तरबपेक्षया । विशेषणेति पूर्वत्रापि सम्बध्यते । यथा ज्यायानिति । यद्यप्यत्र विभज्यमुपपदं न श्रूयते तथाऽपि स्वसात् कनीयसीं कन्यां ततो ज्यायानापेति लभ्यते । ननु तृतीयपादीयमेतत् द्वितीयपादीयात् परं स्थानमर्हति । सत्यमेवमेतत् । किं तु 'तुरिष्ठेमेयःसु' इत्यादौ इमनिच्साहचर्यात् तृतीयपादीयस्य विषयान्तरस्य वक्तव्यस्याभावाच्चेहैव एतदभिधानमिति ज्ञेयम् ॥ ५४ ॥

अथ द्वितीयपादीयम्—

द्वयसज्दघ्नचाविष्टौ प्रमाणविषयौ यथा ।
जानुदघ्नी सरिन्नारीनितम्बद्वयसं सरः ॥ ५५ ॥

'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति सूत्रम् । अत्राद्यौ द्वौ प्रत्ययौ विशेषेणेष्टौ । सरित् जानुदघ्नी । सरः नितम्बद्वयसम् ॥ ५५ ॥

मतुप्प्रकरणे ज्योत्स्नातमिस्राशृङ्गिणादयः ।
इनच्च फलबर्हाभ्यां फलिनो बर्हिणो यथा ॥ ५६ ॥

'तदस्यास्त्यस्मिन्निति मतुप्' इत्येतदादि मतुप्प्रकरणम् । तत्र 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः' इति सूत्रम् । मत्वर्थे एते शब्दा निपात्यन्ते । 'ज्योतिष उपधालोपो नश्च प्रत्ययः । ज्योत्स्ना । तमस उपधाया इत्वं रश्च । तमिस्रा । शृङ्गादिनच् । शृङ्गिणः । ऊर्जसो विनिर्वलच्च । ऊर्जस्वी । ऊर्जस्वलः । गोशब्दान्मिनिः । गोमी । मलशब्दादिनच् ईमसच्च । मलिनः । मलीमसः । 'फलबर्हाभ्यामिनच्' इति व्यवहितोपारितनसूत्रान्तरे वार्तिकम् । इनच्प्रसङ्गात् तदप्यत्रैवोक्तमिति ज्ञेयम् । एते सर्वे विशेषेणेष्यन्ते ॥ ५६ ॥

इनिः प्रयुक्तः प्रायेण तथा ठंश्च मनीषिभिः ।
तत्रापि मेखलामालामायानां सुतरां मतौ ॥ ५७ ॥

प्रायेण बाहुल्येन । 'अत इनिठनौ' इति सूत्रम् । तत्रापि इनिठन्योग्यशब्दमध्येऽपि मेखलादीनां 'व्रीह्यादिभ्यश्च' इति तदनन्तरसूत्रोपात्तव्रीह्यादिगणपठितानां त्रयाणां विशेषेण इमौ प्रत्ययाविष्टौ । मेखली, मेखलिकः, माली, मायी, मायिक इति ॥ ५७ ॥

इति पाञ्चमिकम् । अथ षष्ठं विशेषतो वक्तव्यमपश्यन् तमतिक्रम्य सप्तमं गत्वाऽऽह—

अभ्यस्ताज्झेरदादेशे दधतीत्यादयोऽपि च ।

'अदभ्यस्तात्' इति सूत्रेण अभ्यस्तात् परे झिप्रत्यये झकारस्य अदादेशो विधीयते । तेन सिद्ध्यन्ति ये दधतीत्यादयः शब्दाः तेऽपि मनीषिभिरिष्टाः । जुहोत्यादिस्थो धाञ् धातुः । अस्माज्झिप्रत्यये 'कर्तरि शप्' इति प्राप्तस्य शपः 'जुहोत्यादिभ्यः श्लुः' इति श्लौ 'श्लौ' इत्यनेन धातोर्द्वित्वे अभ्यासस्य 'ह्रस्वः' इति ह्रस्वे जशि 'श्नाभ्यस्तयोः' इति अनभ्यासावयवाकारलोपे दधतीति भवति । एवं ददति जुह्वति जक्षतीत्यादयः ॥

अपरिसमाप्त एव प्रथमपादविषये पूर्ववत् तिङ्विषयत्वात् द्वितीयपादस्थं किञ्चिदाह—

**रोदिति स्वपितीत्यादि सेहटा सार्वधातुकम् ॥ ५८ ॥**

'रुदादिभ्यः सार्वधातुके' इति रुद् स्वप् श्वस् अन् जक्ष् एभ्यो वलादेः सार्वधातुकस्य इड् विधीयते । तथा विहितेन इटा सहितं सार्वधातुकमपीष्टम् । यथा रोदिति स्वपिति श्वसिति प्राणिति जक्षितीति । सार्वधातुकं तिङ्शित्प्रत्ययः । 'तिङ् शित् सार्वधातुकम्' इति संज्ञाकरणात् ॥ ५८ ॥

एवं तिङ्विषयं समाप्य कृद्विषये प्रथमपादस्थेनैव सूत्रेणोक्तं कञ्चन विशेषमाह—

**अभ्यस्तेषु प्रयोक्तव्यमदन्तं घुभृञोः शतुः ।**
**असौ दधदलङ्कारं स्रजं बिभ्रच्च शोभते ॥ ५९ ॥**

जुहोत्यादयो जक्षित्यादयश्च अभ्यस्ताः । तेषां मध्ये यौ घुभृञौ ; 'दाधा घ्वदाप्' इति सूत्रेण दाधातोर्धाधातोश्च घुरिति संज्ञा । भृञ् 'डुभृञ् धारणपोषणयोः' इति जुहोत्यादिः । घुश्च भृञ्च घुभृञौ तयोः सम्बन्धी यः शता शतृप्रत्ययः 'लटः शतृशानचावप्रथमासमानाधिकरणे' इति विहितः तत्सम्बन्धि अदन्तं प्रयोक्तव्यम् । यथा दधदित्यादि । दधदिति घोरुदाहरणम् । बिभ्रदिति भृञः । 'नाभ्यस्ताच्छतुः' इति सूत्रेणेह नुमो

निषेधाददन्तत्वम् । अन्यथा पचन्नित्यादिवत् अन्नन्तत्वं स्यात् । अस्मिन् श्लोके द्वितीयपादे 'अदन्तं च विदेः शतुः' इति पठनमसमीचीनमिति ध्येयम् ॥ ५९ ॥

इति साप्तमिकम् । अथाष्टमिकम्—

[न तवर्गं शकारेण कचित् सं]योगिनं वदेत् ।
यथैतच्छ्याममाभाति वनं वनजलोचने ॥ ६० ॥

वनजं पद्मम् । एतद् श्याममिति स्थिते 'शश्छोऽटि' इति शकारस्य छकारे दकारस्य जश्त्वे चर्त्वे च एतच्छ्याममिति परुषसन्धि रूपं भवति । एवं न कदाचित् प्रयोक्तव्यमिति । अत्र पूर्वार्धे रेखासन्दष्टो भागोऽस्माभिरभ्यूह्य निवेशितः । कोशेषु त्रुटितः ॥ ६० ॥

नैकत्रौकारभूयस्त्वं गतो यातो हतो यथा ।

एकत्रैवाविच्छेदेन ओकारभूयस्त्वं न कर्तव्यम् । यस्मात् 'शैथिल्यं तन्नियच्छति' ।

सावर्ण्यवज्झयो हस्य ब्रूयान्नान्यत्र पद्धतेः ॥ ६१ ॥

अनुनासिकवर्जिता वर्गीया विंशतिर्वर्णा झय् । तस्मात् परस्य हस्य हकारस्य यत् सावर्ण्यं 'झयो होऽन्यतरस्याम्' इति विहितं पूर्ववर्णसावर्ण्यं तद्विशिष्टं शब्दस्वरूपं पद्धतेरन्यत्र पद्धतिपदातिरिक्तं न ब्रूयात् । पद्धतिमात्रे प्रयोक्तुमुचितम् । नान्यत् । यथा 'अम्बराद्धिरण्यगर्भाङ्गभुवम्' इति माघे । अत्र 'सावर्ण्यवत्सयोर्भस्य' इति तृतीयपादपाठासामीचीन्यं स्पष्टम् । इदमप्यत्र बोध्यम् । शश्छोटिसूत्रं चतुर्थे पादे त्रिषष्टितमम् । 'झयो होऽन्यतरस्याम्' इतीदं तस्याव्यवहितपूर्वं सूत्रम् । 'गतो यातः' इत्यादौ सस्य रुत्वविधायकं 'ससजुषोरुः' इतीदं पुनः सूत्रं द्वितीयपादस्थम् । तदत्र क्रमभेदो दृश्यते । 'नैकत्रौकारभूयस्त्वं' इति श्लोकस्य पूर्वं, तदनन्तरं 'नतवर्गं शकारेण' इति श्लोकस्य च पाठे सुस्थितः क्रमो भवति । यद्वा

पूर्वश्लोके 'विश्रच्च' इत्यत्र तवर्गसन्धेरुपस्थित्या प्रथमनिरूपणम् । पश्चात् पादक्रमानुसरणम् । अथ वा वर्णसमाम्नायक्रमेण प्रथमं शकारसन्धिः । पश्चात् रुत्वविधिविषयसकारसन्धिः । ततः परं हकारसन्धिः । प्रथमपक्ष एव खलु समीचीनतम इति ॥ ६१ ॥

कृतं शब्दविवेकमुपसञ्जिहीर्षन् उपक्रमरीत्यैव व्याकरणस्यार्णवत्वं कृत्वाऽऽह

सालातुरीयमतमेतदनुक्रमेण
को वक्ष्यतीति विरतोऽहमतो विचारात् ।
शब्दार्णवस्य यदि कश्चिदुपैति पारं
भीमाम्भसश्च जलधेरिति विस्मयोऽसौ ॥ ६२ ॥

'पञ्चाप'देशान्तर्गतो ग्रामविशेषः सालातुरं नाम । तत्र जातः सालातुरीयः भगवान् पाणिनिः । तदीयं मतमष्टाध्याय्यामुपनिबद्धं अनुक्रमेण यत् किमप्यवर्जयित्वाऽऽनुपूर्व्येण को वक्ष्यति न कश्चिद्वक्तुमीष्ट इति हेतोरहं साकल्येन तद्विवेचनोद्यमाद्विरतोऽस्मि । ननु सन्त्येव तत्र समर्थाः। अत्राह । अङ्ग सन्तु बहवः । एकं प्रदर्शय यस्तथा व्याकरणमध्यैष्ट यथा सर्वाणि शब्दस्वरूपाणि शङ्काकलङ्कलेशवर्जितं अभिधातुमीशीत । प्रसिद्धमेतद् वैयाकरणखसूचिरिति । यदि तु वस्तुतः कश्चिदस्ति स नूनं विस्मयपदम् । न च पुरुषाशक्तिरत्र तथा कारणं यथा शास्त्रस्य गाम्भीर्यम् । शब्दो व्याकरणम् ॥ ६२ ॥

ननु व्याकरणं भवताऽतिस्तूयते । वादाहवक्रीडारसिका हि बुद्धिमन्तः सांख्यन्यायवैशेषिकादिषु दर्शनेषु संरभमाणा रमन्ते । अत्राह–

विद्यानां सततमपाश्रयोऽपरासां
तासूक्तान्न च विरुणद्धि कांश्चिदर्थान् ।
श्रद्धेयं जगति मतं हि पाणिनीयं
माध्यस्थ्याद् भवति न कस्यचित् प्रमाणम् ॥ ६३ ॥

पाणिनीयं मतं व्याकरणमित्यर्थः । अपरासां सर्वासां विद्यानामाश्रयः ।

शब्दसन्दर्भमयत्वात् सर्वासां विद्यानाम् ; शब्दविवेकस्य चैतदधीनत्वात्। एवं तत्त्वे स्थिते 'आश्रयः सर्वविद्यानाम्' इति वात्स्यायनस्य गौतमीयं प्रति वचनं पक्षे पतितेवेति हृदयम् । अयमपरो विशेषो व्याकरणस्य यदिदं विद्यान्तरोक्तं यं कमप्यर्थं न प्रतिषेधति । स्फोटकल्पनं तु व्याख्यातॄणां दोषो न भगवतः पाणिनेः । विद्यान्तराणि पुनरन्योन्योक्तमर्थमाक्षिपन्ति तलातलि कुर्वत इति सार्वजनिकमेतत् । आभ्यां द्वाभ्यां विशेषाभ्यां व्याकरणं लोके सर्वेषां आदरणीयम् । अथापि न कस्यचिदपि प्रमाणमतीवादरणीयं भवति । कस्मात् । माध्यस्थ्यादेव । विवदमानानां हि मध्ये यस्य पक्षे कश्चित् पतति स तावन्नूनं तमाद्रियेत, अन्येषु परिभाषमाणेष्वपि । यदि तु यस्य कस्यापि पक्षो न परिगृह्येत तर्हि सर्व एव उदासते । सेयं सत्यं शोचनीया स्थितिरिति । यद्वा व्याकरणं श्रद्धेयम् । कस्मात् । यस्मान्न कस्यचिदेकस्यैव पुरुषस्य कुलस्य दार्शनिकस्य वा तत् प्रमाणम् ; अपि तु सर्वस्य । कुत एतत् । माध्यस्थ्यात् । तत्तदभिमतार्थप्रतिषेधप्रसङ्गमन्तरा ताटस्थ्यावलम्बनादिति व्याख्येयम् ॥ ६३ ॥

अथ ग्रन्थोपसंहारः—

**अवलोक्य मतानि सत्कवीना-**
**मवगम्य स्वधिया च काव्यलक्ष्म ।**
**सुजनावगमाय भामहेन**
**ग्रथितं रक्रिलगोमिसूनुनेदम् ॥ ६४ ॥**

सत्कवीनां मतान्यवलोक्य, स्वधिया अवगम्य चेति 'बहुविधकृतीर्दृष्ट्वाऽन्येषां स्वयं परितर्क्य च' इति पूर्वोक्तवद् द्रष्टव्यम् । कीर्त्यनुवृत्तये स्वनामकथनम् । कृतज्ञतायै पितुः । ज्योत्स्नादिसूत्रेण गोमानित्यर्थे निपातितो गोमिन्शब्दः । प्रयोजनं सुजनावगमायेति । दूषणपरतया दुर्जनानामत्र प्रयोजनं मन्दमिति भावः । इदं काव्यलक्ष्म ग्रथितं काव्यलक्षणप्रतिपादकोऽयं ग्रन्थः कृत इति ॥ ६४ ॥

नाग्निस्तृणं दग्धुमभूत् समर्थो
यदाहितं न श्वसनोऽपहर्तुम् ।
सर्वस्य कर्तारमिमं न वेद
यदीह यः कोऽपि स किन्नु वेद ॥

इत्युद्यानवृत्तौ षष्ठः परिच्छेदः ।

---

अथ धारणविवेचनसौकर्याय ग्रन्थार्थं विभज्यानुसन्दधाति—

षष्ट्या शरीरं निर्णीतं शतषष्ट्या त्वलंकृतिः ।
पञ्चाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः ॥ ६५ ॥

षष्ट्या शब्दस्य शुद्धिः स्यादित्येवं वस्तुपञ्चकम् ।
उक्तं षड्भिः परिच्छेदैर्भामहेन क्रमेण वः ॥ ६६ ॥

इति भामहीयः काव्यालङ्कारः ।

स्थूलमेव गणनस्याभिमतत्वात् किञ्चिन्न्यूनाधिकभावेऽपि न क्षतिः ॥

---

अस्ति रङ्गमिति विश्रुतं पुरं
पण्णया परिगतं सदोदया ।
ब्रह्म यत्र फणितल्पमाश्रितं
स्वं प्रकाशयति वैभवं स्फुटम् ॥

तत्रास्त वंशानुगुणश्रुताढ्यः
श्रुतानुरूपाचरणोज्ज्वलश्रीः ।
सौजन्यसिन्धुः शमवासभूमि-
र्दयानिधिर्देशिकतातयार्यः ॥

तृतीयो नन्दनस्तस्य नन्दनेऽजनि वत्सरे ।
आ जन्मनो मनो यस्य निवृत्तमसतः पथः ॥

परिचितपदमार्गो योऽवगाढप्रमाणः
परममहति वाक्याम्भोनिधौ दूरमग्नः ।
स्वधिगतनिगमान्तः साहितीसारवित्तः
कविकुलपथपान्थः क्लृप्तनैकप्रबन्धः ॥

यः प्राच्यविद्येश्वर इत्युदीरित-
स्तन्त्रार्णवत्वेन सभाजितस्तथा ।
स वृत्तिमेतामधिभामहक्रियं
श्रीशैलताताचार्यशिरोमणिर्व्यधात् ॥

अशुद्धिभिरसंख्याभिरसत्प्राया बभूव या ।
अशोधि षट्परिच्छेदी षड्भिर्वर्षैरियं मया ॥

यः साहितीपथपरिश्रमसंस्कृतात्मा
मीमांसनक्रमपरिष्कृतशेमुषीकः ।
पङ्केरुहाक्षपदपङ्कजसङ्गतश्च
प्रायो न किञ्चिदपि तस्य जगत्यभेद्यम् ॥

---

इति
मीमांसार्णवस्य श्रीशैलताताचार्यशिरोमणेः
प्राच्यविद्येश्वरस्य कृतिर्भामहालङ्कारविवृतिः
उद्यानवृत्तिः ।



# वृत्तिपरिशिष्टम् ॥

I. 7 'यावद्रामायणकथा त्वत्कृता प्रचरिष्यति ।
तावदूर्ध्वमधश्च त्वं मल्लोकेषु निवत्स्यसि ॥'
(बाल 2. 37-8)

इति रामायणश्लोकोऽप्यनुसन्धेयः ।

I. 9 शब्दच्छन्दोऽभिधानार्थाः ।

लोचनकार आह—"भामहोक्तं शब्दच्छन्दोऽभिधानार्था इत्यभिधानस्य शब्दाद्भेदं व्याख्यातुं भट्टोद्भटो बभाषे 'शब्दानामभिधानमभिधाव्यापारो मुख्यो गुणवृत्तिश्च' इति" इति । एतदनुसारी वृत्तावस्माभिरुक्तोऽभिवानार्थः। वस्तुतस्तु—

शब्दानुशासनज्ञानमभिधानप्रवीणता ।
छन्दःप्रभेदवेदित्वमलङ्कारेषु कौशलम् ॥

इति श्रीशार्ङ्गदेवकृतसङ्गीतरत्नाकरतृतीयाध्यायश्लोकं व्याचक्षाणेन कल्लिनाथेन यदुक्तम्—

शब्दानुशासनं व्याकरणशास्त्रम् । तस्य ज्ञानम् । एतेन प्रथमं तावत् सुशब्दापशब्दविवेचकेन भवितव्यमित्यर्थः । अभिधानममरकोशादि । छन्दःप्रभेदा अनुष्टुबादयः । अलङ्कारा उपमादयोऽनुप्रासादयश्च ।

इति, तदनुरोधेन नामलिङ्गानुशासनादिकोशपरत्वमेव युक्तं वक्तुम् ।

---

I. 12 'नाकवित्वमधर्माय' इति बहुत्र दृष्टः पाठः आदर्तुमुचित इति कविवर य. वरदाचार्याः । तथा सति—अकवित्वं अधर्माय व्याधये दण्डनाय वा न भवति । कुकवित्वं पुनः न परमेतेभ्योऽनिष्टेभ्यो भवति; अपि तु मरणात्मकमहत्तरानिष्टात्मकमिति व्याख्यातव्यम् ।

---

I. 30. 'युक्तं वक्रस्वभावोक्त्या' इत्येतद्विवरणावसरे उदाहृते हेमचन्द्रग्रन्थखण्डे 'सोऽन्यालङ्कारगोचरः' इति स्थितं पाठं कृत्वा व्याचक्ष्महि। 'अलङ्कार्यतया तेषां किमन्यदवशिष्यते' इति स्वभावोक्त्यनङ्गीकारमतसमाधानप्रवृत्तत्वादत्र 'सोऽन्योऽलङ्कारगोचरः' इति पठितुं युक्तमिति न्यायमीमांसाशिरोमणि श्री पञ्चापगेशशास्त्रिणः।

---

II. 70. "को वा हेतुरनार्याणां धर्म्ये वर्त्मनि वर्तितुम्।"
इत्यलङ्कारसर्गे भट्टिः। तेनात्रापि 'को वा हेतुरलं सिन्धोः' इत्येव युक्तम्।

---

II. 87. 'इत्येवमादिकं काव्यं वार्तामेनां प्रचक्षते।'
इति पठित्वा स्वभावोक्तिप्रभेदरूपो वार्तानामाऽलङ्कारविशेष इहोक्त इति मत्वा भट्टिकाव्ये साक्षादातिशयोक्त्युदाहरणीभूतं श्लोकं एतदलङ्कारोदाहरणतया व्याचक्षाणौ जयमङ्गलादिव्याख्याकारौ अतिस्थूलदृक्षानाविति सुधीभिर्विभाव्यम्।

---

III. 9. 'तुषारपतनाच्चैव मृदुत्वाद्भास्करस्य च।
शैत्यादगाग्रस्थमपि प्रायेण रसवज्जलम्॥'

इति रामायण (आ. 16. 25.) श्लोके विषपरतया रसपदप्रयोगः।

---

IV. 24. 'विचार्य सर्वतो दृष्टिं कानने काननप्रियः।' इति श्रीमति रामायणे 'विशेषेण चारयित्वा' इत्यर्थे 'विचार्य' इति प्रयुज्यते। न तु 'विमृश्य' इत्यर्थे। तद्वदिह 'विचारणा' इति विभज्य घटनायां प्रयोगः।

---

V. 6. 'कल्पनां नामजात्यादि....' इति युक्तं मूलग्रन्थानुरोधादिति महामहोपाध्याय-विद्यावाचस्पति-श्रीकुप्पुस्वामिशास्त्रिचरणाः।

---

V. 48. 'अस्माद्धंसा जलक्लिन्नाः पक्षैः सलिलविस्रवैः ।
कुरराः सारसाश्चैव निष्पतन्ति पतत्रिणः ॥२१ ॥
साध्वत्र प्रविशामेति मया तूक्ताः प्लवङ्गमाः ।
तेषामपि हि सर्वेषामनुमानमुपागतम् ॥ १३ ॥'

इति श्रीमद्रामायणकिष्किन्धाकाण्डद्विपञ्चाशसर्गश्लोकौ स्मरता इदमनुमानं प्रत्युक्तं स्यादिति मन्तुमस्त्यवसरः ।

---

V. 62. अवतारिकायां 'वाक्यार्थदोषा' इति । अर्वाचीनैरालङ्कारिकैः पाक इत्युच्यमानस्य पुनः पुनः शब्दार्थसन्दर्भकरणाभ्याससाध्यस्य प्रौढिरूपस्य गुणविशेषस्य विपर्ययरूपा इमे दोषा इति ज्ञेयम् । 'त्रयश्चैते' इति प्रामादिकमशुद्धम् । 'त्रिभिश्च श्लोकैरेते वक्ष्यन्ते' इति पठनीयम् ।

---

VI. 17. कमलशीलनाम्ना बौद्धेन कृतया व्याख्यया सहिते शान्तरक्षितनाम्ना कृते तत्त्वसंग्रहाभिधे (बरोडा-पुस्तकमालायां प्रकाशिते) ग्रन्थे एतदादयस्त्रयो भामहश्लोका उद्धृता व्याख्याताश्च दृश्यन्ते । यथा—

'यदि गौ'रित्यादिना श्लोकत्रयेण भामहस्य मतेन प्रतीत्यादियाधामुद्भावयति ।

यदि गौ(रिति शब्दोऽयं भवेद)न्यनिराकृतौ ।
जनको गवि गोबुद्धेर्मृग्यतामपरो ध्वनिः ॥ ९१२ ॥

यदि गोशब्दः अन्यव्यवच्छेदप्रतिपादनपरः तदा तस्य तत्रैव चरितार्थत्वात् सास्नादिमति पदार्थे गोशब्दात् प्रतीतिर्न प्राप्नोति । ततश्च सास्नादिमत्पदार्थविषयाया गोबुद्धेर्जनकोऽपरो ध्वनिरन्वेषणीयः स्यात् ॥ ९१२ ॥

स्यादेतत् । एकेनैव गोशब्देन बुद्धिद्वयस्य जन्यमानत्वान्नापरो

ध्वनिर्मृग्यत इत्य(त्र)ाह न त्विति ।

न तु ज्ञानफलाः (शब्दा न चैकस्य फलद्व)यम् ।
अपवादविधि(ज्ञानं फलमेकस्य वा कथम्) ॥ ९१३ ॥

विधिविषयं प्रतिषेधविषयं च ज्ञानं फलं येषां ते तथोक्ताः । ततः किमित्याह न चैकस्येत्यादि । न ह्येकस्य विधिकारिणः प्रतिषेधकारिणो वा शब्दस्य युगपद्विज्ञानद्वयलक्षणं फलम् । उपलभ्यत इति शेषः । न चापि परस्परविरुद्धं अपवादविधिज्ञानं फलं युक्तम् ॥ ९१३ ॥

प्रागित्यादिना उपचयहेतुमाह—

प्रागगौरिति विज्ञानं गोशब्दश्राविणो भवेत् ।
येनागोः प्रतिषेधाय प्रवृत्तो गौरिति ध्वनिः ॥ ९१४ ॥

यदि च गोशब्देनागोनिवृत्तिः मुख्यतः प्रतिपाद्येत । तदा गोशब्दश्रवणानन्तरं प्रथमतरं अगौरित्येषा श्रोतुः प्रतिपत्तिर्भवेत् । यत्रैव ह्यव्यवधानेन शब्दात् प्रत्यय उपजायते स एव शब्दार्थो व्यवस्थाप्यते । न चाव्यवधानेनागोव्यवच्छेदमतिरुपजायते । अतो गोबुद्ध्यनुत्पत्तिप्रसङ्गात् प्रथमतरमगोबुद्धिप्रसङ्गाच्च नापोहःशब्दार्थ इति ॥ ९१४ ॥

अत्र बहुधा पाठभेदो दृश्यत इति स्पष्टम् । तृतीये श्लोके 'प्रागगौरिति विज्ञानं' इत्ययं पाठभेदस्त्ववश्योपादेयः । काव्यालङ्कारे 'पुरा गौरिति विज्ञानं' इति स्थितपाठेऽपि 'पुरा अगौरिति विज्ञानं' इति छित्वा व्याख्येयम् ।

द्वितीयश्लोके तत्त्वसंग्रहे 'न तु' इत्ययुक्तमिति भाति । 'ननु' इत्युचितः पाठः ।

---

# अनुक्रमाणिका ॥





† एवं अन्तर्गमितानि उत्तरार्धानि ।

*

न



3

## भामहकीर्तितग्रन्थ,ग्रन्थकारनामानि ।

| पुट | श्लोक | | पुट | श्लोक | |
|---|---|---|---|---|---|
| १५ | ३३ | अश्मकवंशादि | ५८ | ८८ | मेधावी |
| ३८ | १९ | अच्युतोत्तरम् | ६४ | ८ | रत्नाहरणम् |
| ,, | ,, | रामशर्मा | ६५ | १० | राजमित्रम् |
| ४४ | ४० | मेधावी | १०८ | १७ | कणादः |
| ४५ | ४५ | राजमित्रम् | १४९ | ३६ | न्यास(कार) |
| ४६ | ४७ | शाखावर्धनः | १६० | ६२ | सालातुरीय |
| ४९ | ५८ | रामशर्मा | ,, | ६३ | पाणिनीयम् |

# शोधनिका ॥



| Page | Line | शुद्धम् | Page | Line | शुद्धम् |
|---|---|---|---|---|---|
| ५ | २ | विशेषादि, युक्तिः | ८२ | २४ | सञ्जातात्मनः |
| ११ | १७ | 'नाटकद्विपदी' इति | ८४ | १५ | पतिच्छन्दा |
| | | वा पठनीयम् । | ९० | ६ | को ह्यर्हसि |
| १६ | २४ | विभागोऽत्र | ९१ | १० | तद्विरोध |
| १७ | ५ | कोमलास्तथा | ,, | २० | लोकशास्त्रा |
| २२ | ८ | दर्थात् | ९४ | २४ | मुखाच्च्युतम् |
| ,, | १४ | मम्मटा | १०१ | १५ | शास्त्रार्थघटना |
| २४ | १२ | धानं काव्ये | १०६ | ७ | उदकाहरण |
| ,, | २१ | शुभ्रदग्दष्टैः | ,, | ८ | इति । |
| ३६ | ८ | स्तौति | १०७ | ७ | ग्रन्थकारस्य |
| ,, | २१ | रुद्रटादौ | ,, | १२ | नास्तीत्यपरः |
| ३७ | १९-२० | भासमाने | १०८ | २१ | शब्दमा |
| ३८ | १३ | ते तत्र | १०९ | २१ | असन्दिग्ध |
| ४४ | २ | प्रतिपद्यते | ११० | १ | प्रत्यक्षबाधिनी |
| ४६ | २ | निष्पेतु | ११४ | २२ | प्रथमाह्निके |
| ५१ | १४ | अत्रैकेन | ११५ | १९ | वक्ष्यते' |
| ५२ | ९ | कश्चिन्न | ,, | २४ | रीत्या भेदेन पृथ- |
| ५३ | १४ | सिन्धोर्वि | | | क् पृथक् |
| ५६ | १४ | शुक्लांशुकानि | ११७ | ५ | व्यवह्रियमाणं |
| ६५ | १-५ | ( पुनरुक्तमिदं | ११९ | १४ | अर्थातिलंघनात् |
| | | परित्याज्यम्) | १२१ | ३ | घनं लघु । |
| ७८ | १३ | अद्भुतार्थत्वं | ,, | १७ | क्षेपः |

| | | | | | |
|---|---|---|---|---|---|
| १२२ | ३ | सपक्षसत्त्वं | १४१ | ५-६ | प्रतियोगिगोविज्ञानं |
| १२७ | १८ | त्रिभिश्च श्लोकैरेते | १४२ | १६ | सम्बन्धिनः |
| १३० | ५ | भाति | १४५ | १ | छान्दस |
| ,, | ६ | अमर्त्याशिनम् | १४७ | ९ | तद्घटित |
| १३१ | १३ | प्रस्कन्दयत्यम्बु | १४९ | १ | (इयं पंक्तिस्त्याज्या) |
| १३७ | ७ | शपथैरपि | ,, | २० | हल्ग्रहणस्य |
| १३९ | ६ | विवेकिनस्तु | १५५ | १४ | लाक्षारोचनाङ्क् |
| १४० | १ | प्रत्याययतीति | १६३ | १० | षड्भिर्वर्षैरियं |
| ,, | ,, | कोऽन्यापोहो | ,, | १७ | भामहालङ्कार |
| ,, | २२ | ध्वनि' रित्यनेन | १६४ | २ | तावदूर्ध्वमधश्च |

# APPENDIX.

## DEFINITION OF POETRY OR KAVYA.*

### CHAPTER III

### THE ALANKARIKAS.

Now I should come to our own Alankarikas. Things, we know, are generally defined in three ways:- by their causes, by some special features, inherent and permanent in them, or by their effect. To exemplify in order:—that which is produced by fire is smoke; that which burns is fire; that whose creation is this whole universe is Brahman. Now if you consider the different definitions of poetry given by our Alankarikas you may easily find that everyone of them belongs either to the second or the third of these categories of definition. But nowhere can we meet with a definition that belongs to the first category. The reason perhaps is this. We know that things unknown are defined by things known. The reverse is impossible. If so, it is very plain that poetry cannot be defined by its cause. We cannot know what its cause is until we know what poetry is. Power of imagination, high talents, great scholarship, all these and such other phrases are too general to give a correct idea of that recondite faculty of man which gives birth to poetry. When we wish to specify that faculty, or the constituent parts of that faculty, we cannot do so otherwise than by phrases like *poetic* faculty, *poetic* imagination and so on—a fact which decisively proves the case in question, namely, without knowing what poetry is, it is impossible to know what the cause of poetry is. I maintain that Dandin and Mammata were fully conscious of this fact and therefore, they first defined poetry without referring to its causes, and pointed them out afterwards so that those who wished to become poets might know the directions in which they

---

*Thesis approved by the Madras University for the Degree of Master of Oriental Learning.

should move for the achievement of their object. Since thus, the causes of poetry have nothing to do in our attempt to get at a definition of it, we may well pass over them.

## BHAMAHA

It is somewhat curious that in Bhamaha's Kavyalankara, the earliest extant work on Poetics, we cannot find a definition of poetry; though, as he says at the end, "षष्ठ्या शरीरं निर्णीतम्", the whole of the first Pariccheda is devoted to describing the 'body of poetry.' When Bhamaha says—

शब्दार्थौ सहितौ काव्यम्,

[The word and sense taken together are poetry.]

it cannot be deemed that he intends to define poetry. Rather the idea underlying these words seems to be that neither the word nor the sense alone is poetry, but both of them taken together. In spite of such unaccountable silence of Bhamaha in the matter of defining poetry, we are not wholly left in the dark as to what, in his opinion, makes a literary composition fit for the name of poetry and differentiates it from other kinds of literary productions. Since, as is shown by Sovani in his 'Pre-dhavani schools' (BCV*., p. 393-4) Bhamaha repeatedly says that *Vakrokti* embellishes the poetic speech and sense, it may be concluded that according to Bhamaha the indispensably essential requisite of poetry is Vakrokti. But we should first determine what Bhamaha's Vakrokti means. When we consider the few *slokas* scattered here and there through the *Kavyalankara* which speak of Vakrokti (and which are, all of them, specifically pointed out by Sovani), we are generally of the impression that it is in Bhamaha's view, the all-embracing principle of poetry, and thus it is more or less synonymous with Alankara in the old Alankarikas' sense of the word. But such conclusion I can hardly persuade myself to accept. At the end of the second

* Bandarkar Commemmoration Volume.

Pariccheda, Bhamaha does mention and illustrate what is called the *Svabhavokti* Alankara. Although this Alankara is there introduced with 'some say that' "इति केचित् प्रचक्षते", it will not be reasonable to say that he does not accept it as one of the poetic figures. If so he would have stated expressly as he had done in the case of *Hetu*, *Sukshma* and *Lesa*. While Sovani, ignoring ll. 93 of Bhamaha, declares that according to him Vakrokti is the life-giving principle of poetry, Dr. De not only does not take notice of it but goes to the length of asserting that 'such Svabhavokti or natural mode of speech to which Dandin is so partial, is not acceptable to Bhamaha, who refuses to acknowledge Svabhavokti as a poetic figure at all.' [See his introduction to the Vakrokti-Jivita, p. XIV.] I would say 'he does not take notice of it', not 'he is ignorant of it'. We know, from a foot-note of his in page 21, that Dr. De has seen that *sloka*. There he means to say that 'Kuntala refutes Svabhavokti, following Bhamaha's theory of poetry.' Where, we should ask Dr. De, does Bhamaha rufuse to acknowledge Svabhavokti? So far as our study of the Kavyalankara goes, nowhere in its six chapters can we find any statement of Bhamaha to that effect. As I have already said, "इति केचित् प्रचक्षते" is not sufficient to prove the non-acceptance of Svabhavokti by Bhamaha. If it be said it is sufficient, many Alankaras would have to be struck off from Bhamaha's list. For instance take *Asis*. Bhamaha says आशीरपि च केषाञ्चिदलङ्कारतया मता। No one would say that the *asis* Alankara is not acceptable to Bhamaha because he adds "some accept" "केषाञ्चिन्मता". Just the same is the case with Svabhavokti. And further there is not a single Alankarika, except indeed Kuntala, so far as we know, who denies Svabhavokti a place in poetry. Udbhata, the famous commentator of Bhamaha, treats of this Svabhavokti in the very place and order in which Bhamaha has treated it. Dandin's list of Alankaras is headed by Svabhavokti, or Svabhavakhyana, as it is called there. As Dandin criticises Bhamaha's views on

many a point, he would have, when explaining the Svabhavokti Alankara, surely uttered at least a few words of censure—which is not the case—had he thought in the least that Bhamaha refused to recognise Svabhavokti as a poetic figure. All the difference we can perceive between Bhamaha's and Dandin's treatment of Svabhavokti is this. Bhamaha, though not, like Dandin, expressly classifying Alankaras, yet, having in mind the same division as Dandin's and having regard to the predominance of 'Vakroti' Alankaras,—I mean the Alankaras other than Svabhavokti—in poetry, gave priority to such of them as he intended to illustrate by his own *slokas* 'स्वयं कृतैरेव निदर्शनैः' and treated Svabhavokti at the end of the chapter. But Dandin following a more scientific method and having in mind the division he is going to make at the end 'भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्' mentions and treats of Svabhavokti first of all. Bhamaha and Dandin, therefore, are indubitably of one mind and in full agreement in dividing Alankaras into two kinds, Svabhavokti and Vakrokti, and consequently the Vakrokti of the one means as much as that of the other, nothing less, nothing more.

Dr. De, however, tries to show in his introduction to Vakroktijivita (pp. XIV—XVII) that there is some difference between Bhamaha's and Dandin's Vakroktis. But he is not there very clear and my impression after a very careful perusal of these pages is that he had missed the true significance of ll. 362 of Dandin and that he is unnecessarily troubling himself to interpret in his own way the word Vakrokti, which Dandin only once uses there. Though I do not now propose to go any further in proving the truth of my statement, yet I wish to say one word as to Dr. De's understanding of the views of the two commentators of Dandin about the *sloka* referred to. After quoting Hrdayangama, Dr. De writes:— 'Tarunavacaspati agrees with this interpretation but differs as to what group of Alankaras Dandin signifies by this collective name: *Svavyakhyanavyatirikta sarvalankrtir vakroktir*

*ityucyante*' (this should be in singular *ityucyate*). It is here obvious that *svavyakhyana* is an erroneous reading for *svabhavakhyana.* For, among the Alankaras mentioned in the beginning of the chapter by Dandin or anywhere in the Kavyadarsa we cannot find one with the name of *svavyakhyana.* Even if one should perversely insist upon the correctness of the reading, yet there is no alternative except to take it to mean *Svabhavakhyana*. So, there exists no difference of opinion between these two commentators of Dandin as to what group of Alankaras is meant by Vakrokti.

Now coming to our present consideration it is shown that, according to Bhamaha too, Svabhavokti is a poetic figure. That Kuntala vehemently attacks this theory is a fact which we plainly see through the creditable edition of the Vakroktijivita by Dr. S. K. De. But his statement (P. 21, f. n.) that, in rejecting Svabhavokti, Kuntala follows Bhamaha is uuauthorised and unsustainable. When Kuntala says यतश्चिरन्तनैरपरं स्वभावोक्तिलक्षणमलङ्करणमाम्नातम्, (because the ancients have mentioned another figure named Svabhavokti), he meant by 'the ancients', it seems to me certain, Bhamaha and Dandin. We know that Kuntala does not as a rule agree on everything with Bhamaha. For, we are informed by Sovani (BCV, p. 396) that he rejects the *yathasankhya* Alankara and some others which are accepted by Bhamaha. Why cannot that be the case with Svabhavokti? As I said before nobody among the preceding or succeeding Alankarikas seems to be willing to support Kuntala on this point. He is left pitiably alone. His *Sastraic* and somewhat pedantic arguments against Svabhavokti come into conflict with experience. Let everyone that has taste for poetry see whether there is any difference or not between these two compositions:–

गोरपत्यं बलीवर्दस्तृणान्यत्ति मुखेन सः ।

(quoted in Rudrata's com. VII. 10.)

and, आक्रोशन्नाह्वयन्नन्यानाधावन् मण्डलै रुदन् ।

*

गा वारयति दण्डेन बालः सस्यावतारिणीः ॥

(Bhamaha II. 94.)

In convincing ourselves as to the fitness of Svabhavokti to be treated as an Alankara of poetry, these words of Leigh Hunt may be advantageously borne in mind:—

> "Nay the simplest truth is often so beautiful and impressive of itself that one of the greatest proofs of his genius consists in his leaving it to stand alone illustrated by nothing but the light of its own tears or smiles, its own wonder, might or playfulness".

(ECE.* p. 303)

Now there is a line in Bhamaha which gives room for doubt about his acceptance of Svabhavokti as a poetic figure. After declaring that *hetu*, *sukshma*, and *lesa* are not accepted as Alankaras, he subjoins his reason thus: समुदायाभिधानस्य वक्रोत्त्यनभिधानतः (II-86).

(I am not clear about what is meant by समुदायाभिधानस्य. Yet) it may be roughly translated thus:—

" Because taken as a whole it does not involve Vakrokti. "

This reason of Bhamaha for his non-acceptance of the three Alankaras at once leads us to think that according to Bhamaha there can be no Alankara where there is no Vakrokti. But I do not think that is the meaning of Bhamaha. As is shown above, in Bhamaha's view, all the Alankaras other than the one, Svabhavokti, are governed by the Vakrokti principle. An Alankara, if it is to be really so, must belong to the one or the other of the two kinds of Alankaras— Svabhavokti and Vakrokti. When the real nature of a *pseudo-Alankara* is to be explained, what we should do is to show that there is neither Svabhavokti nor Vakrokti. It would be quite wrong if, speaking of a particular poetic expression, we

*English Critical Essays. (19th Century) (The World's Classics)

say that this is not an Alankara because it is not a Svabhavokti. For there are Alankaras such as *upama*, yet they are not Svabhavoktis. In the same way it would be wrong if, taking a passage, we say that because it is not a Vakrokti it cannot be an Alankara. For there is an Alankara called Svabhavokti and it is not a Vakrokti. So before we can pass judgment upon a certain expression as not having any Alankara, we should satisfy ourselves as to its coming under neither of the two heads of Alankaras —Svabhavokti and Vakrokti.

Now Svabhavokti has no subdivision, while Vakrokti has so many. When this is well borne in mind, it will appear quite reasonable that whenever the names of Alankaras such as *upama* and *dipaka* are heard, we at once understand that they are not of the Svabhavokti kind. If thus, the very names of the other Alankaras invariably give the idea of their not being Svabhavoktis, there is no use of stating it expressly. In this light should be interpreted the line in question. *Hetu*, *Sukshma* and *Lesa* by their very names imply that they are not the species of the Svabhavokti Alankara. Then, if these non-Svabhavokti Alankaras are really Alankaras, they should involve some kind of Vakrokti in them. But they do not. Bhamaha thinks so. Therefore, they are not accepted as Alankaras. This is, I believe, the real meaning of Bhamaha.

When the foregoing remarks are kept in mind it will be clearly seen that the word *vakrasvabhavoktya* in the second line of Bhamaha I. 39, युक्तं वक्रस्वभावोक्त्या सर्वमेवैत-द्दिष्यते, need not be necessarily interpreted as Sovani has interpreted it. He takes the word to mean the same as Vakrokti, ignoring the second element 'Svabhava' in that compound word. According to him the word is to be parsed वक्रस्वभावा उक्तिः ; but it may be as well parsed so as to mean वक्रोक्ति and स्वभावोक्ति. Since in his interpretation, the word Svabhava becomes purposeless in the sentence,

my interpretation, it may be seen, according to the interpretative laws of *Mimamsa*, is preferable. I should like here to point out, though it has no direct bearing upon our present consideration, that Sovani is misconstruing the line quoted above when he explains it thus:—'All the sub-divisions of poetry I mentioned (by him 16-30) are admissible to the designation of Kavya in so far as they possess *Vakrasvabhavokti* or imaginative speech.' (BCV. p. 394.)

Bhamaha, after making a four-fold division of poetry into two, three, four and lastly five kinds and explaining what the first four kinds of the last division are, writes:—

अनिवन्धं(द्धं) पुनर्गाथाश्लोकमात्रादि तत्पुनः ।
युक्तं वक्रस्वभावोक्त्या सर्वमेवैतदिष्यते ॥

We see that in this *sloka* there are three separate sentences: (1) ending with श्लोकमात्रादि (2) तत्पुनर्युक्तं वक्रस्वभावोक्त्या and (3) सर्वमेवैतदिष्यते. Of these three sentences the first describes what the fifth kind of the last division is. A metric composition in Prakrt dialects is generally called a *gatha*, and that in sanskrit a *sloka*. This *anibaddha* of Bhamaha is called *muktaka* by later Alankarikas. By the second sentence Bhamaha means to tell us this; *slokas* such as

भोजनं देहि राजेन्द्र घृतसूपसमन्वितम् ।

and

गोरपत्यं बलीवर्दस्तृणान्यत्ति मुखेन सः ।

must not be brought under this kind. There is no Alankara here at all; neither Svabhavokti nor Vakrokti. The third and last sentence indicates that he approves of all species of poetry divided and described by him in the preceding *slokas*. True, all that is not expressly rejected may readily be taken as approved by him. However, since he is next going to controvert another division of poetry, Bhamaha thinks it proper, as all the experienced and able writers would think, to finish the previous topic in this way. Unless the *sloka* is interpreted in this

way, the two words in the first line—तत् and पुनः, would remain without any connection either with the preceding or the succeeding sentence.

If thus both of these *uktis* are equally embellishers of poetry, does it not go without saying that one of them alone will not do for the purpose of defining poetry? The definition formed with one of these two principles is sure to leave out those pieces of poetry, the poetic essence of which is the other principle—a fact which will render the definition faulty of *avyapti*. So we should take leave of Vakrokti and look elsewhere in Bhamaha for some such poetic principle as can help us in forming a definition of poetry. To the best of my belief, the following two lines, with a little difference in wording but the same in substance, may be taken to indicate what Bhamaha considers the essence of poetry :—

अग्राम्यशब्दमर्थ्यं च सालङ्कारं सदाश्रयम् । (I-19)
अलङ्कारवदग्राम्यमर्थ्यं न्याय्यमनाकुलम् । (I-35)

In these two lines, the words, other than सालङ्कार and अलङ्कारवत्, mean this—that poetic speech and sense should be free from blemishes. From the words सालङ्कार and अलङ्कारवत् we are to understand that Bhamaha's theory is that Alankara is the life principle of poetry. So I think 'अलङ्कृतौ शब्दार्थौ काव्यम्' is the definition of Bhamaha. The name of the work itself, *Kavyalankara*, is suggestive of Bhamaha's theory of poetry. As Sovani has pointed out (BCV p. 305), Bhamaha uses the word गुण in the sense of Alankara. Bhamaha makes no difference between गुण and अलङ्कार, not through want of keen critical acumen. Since he is decidedly posterior to the sage Bharata, who with unmistakable distinctness, enumerates both poetic *gunas* and alankaras, it is impossible that the difference known to Bharata between these poetic embellishers did not come to his knowledge. He new it full well but held the opinion which his commentator Udbhata has expressly recorded about it.

Therefore it is, and it is unaccountable otherwise, that he not only uses nowhere in the Kavyalankara the word '*guna*' in the sense in which other Alankarikas use it, not even when he speaks of the three famous *gunas*—माधुर्य, प्रसाद, and ओजस् but also uses it in the sense of Alankara.

## DANDIN.

Just the same seems to be the case with Dandin. Whereas Bhamaha first cites भाविक as an Alankara and then calles it *guna*, Dandin in the first chapter calls श्लेष etc., *gunas*—

इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः— (I-42)

and then in the second chapter calls them Alankaras—

काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रियाः ।
साधारणमलङ्कारजातमद्य प्रदर्श्यते ॥

Commenting upon this *sloka*, Tarunavacaspati tries in plain language to prove that the *gunas* and Alankaras are undistinguishable. I think the following few lines of his are worth quoting here :—

पूर्वं श्लेषादयो दश गुणा इत्युक्तम् ; कथं ते अलङ्कारा उच्यन्त इति चेत्—शोभाकरत्वं हि अलङ्कारलक्षणम् ; तल्लक्षणयोगात् तेऽप्यलङ्काराः । शोभाहेतवो गुणाः, शोभातिशयहेतवोऽलङ्कारा इति कैश्चिदुक्तम् ; शोभातिशयहेतुत्वस्यैव विवक्षितत्वान्नायं भेदहेतुरिति गुणा अलङ्कारा एवेत्याचार्याः । ततः श्लेषादयो गुणात्मकालङ्काराः पूर्वं मार्गप्रभेदप्रदर्शनायोक्ताः । इदानीं तु मार्गद्वयसाधारणा अलङ्कारा उच्यन्ते ॥

To those who will carefully read the above *sloka* of Dandin, it would be apparent that Tarunavacaspati's exposition of the text faithfully brings out Dandin's meaning. It is only Vamana that has begun to demarcate distinctly *gunas* and Alankaras and their respective functions in poetry. Though, as I have already observed Bharata separately mentions, defines and illustrates

*gunas* and Alankaras and implies thereby that *gunas* and Alankaras are different and cannot interchange their names, yet Bhamaha, being of the opinion that the difference between them is only illusory and fanciful in as much as both groups in the same way function as poetic embellishments, tacitly disregards and rejects Bharata's views, and accepts only one category of poetic embellishers, Alankara, though sometimes called *guna*, which includes everything that may be thought an indispensable element of poetry. To this theory of Bhamaha, Dandin gives his whole-hearted assent and indirectly indicates the undistinguishableness of *gunas* and Alankara by giving a definition which comprehends both of them:—

काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।

But Bhamaha differentiates कथा and आख्यायिका from each other, and refuses to distinguish वैदर्भ from गौडीय. This is not acceptable to Dandin and here he attacks Bhamaha with some vehemence. According to Dandin, Alankaras are to be divided into two classes—special and common. Most of the so-called *gunas* Dandin thinks, are Alankaras of the special class; because they are accepted by Vaidarbhas alone; not by Gaudas. Though, thus, with regard to some details, Bhamaha and Dandin hold mutually conflicting and opposite views, yet they are in full agreement as to the identity of *gunas* and Alankaras and about the acceptability of Svabhavokti as a poetic Alankara, as I have shown in the foregoing pages.

The fact that Vamana divides *gunas* into two groups, as those of word and those of sense, and *riti* into three kinds instead of two, leads, naturally, some to think that he has made some improvement upon Dandin and therefore both of them are of the same school. (BVC, p. 393.) But the nomenclature of the ten *gunas* being the same in Bharata too, why cannot the improvement be upon Bharata as well? In truth: though the names are the same, they are given very different meanings by each author. For instance, Dandin's *slesa* is Vamana's *ojas*;

while Vamana's *slesa* has nothing corresponding to it in Dandin. And Vamana's *slesa* too is further strained by Jagannatha so as to give it a more restricted sense. This process of innovation from Dandin to Jagannatha may be shown in the case of each of the *gunas*. Hemacandra has alredy made an attempt in his Alankaracudamani to show the various meanings given by his predecessors to the names of *gunas*. Further I do not think Dandin's conception of these *margas* is the same as Vamana's. In Bhamaha and Dandin, we do not meet with the term *riti*. Dandin's *marga* means kind or way. In many places he uses this word मार्ग where it is quite impossible to take it in the sense of Vamana's *riti*. Morover, he often indiscriminately uses also the words वर्त्म, पन्थाः, प्रस्थानम् in stead of मार्ग. All this goes to show that *marga* has not assumed any technical sense in Dandin.

Nor do we see that Bhamaha or Dandin speaks of the essential principle of poetry as the *soul* of it. Such an idea seems to have never come to their mind. Word and sense are embellished by what are called Alankaras, and they are poetry, and they please the readers or hearers of taste. This much and no more is the idea of Bhamaha and Dandin, concerning poetry. True, Dandin uses in the beginning of the *Kavyadarsa*, in connexion with poetry, the word denoting body, which some may think, implies that the author meant to call the characteristic principle of poetry its *soul*. But it seems to me that it will be almost impossible to answer if it be asked why the word should be taken in such a far-reaching sense. This word is annotated in the *Hrdayangama* as meaning स्वरूप. And in *sastraic* discussions such phrases are very often used as लक्षणशरीर, अधिकरणशरीर etc., where शरीर is not intended to suggest any contrast with the soul. Exactly the same, I believe, is the case here. To Dandin, Alankara or the embellisher is to poetry what sweetness is to milk (1. 102). If still on the sole authority of this single equivocal word, it be tenaciously held that Dandin

has conceived of a *poetic soul*, I am at a loss to know why the same cannot be said of Bhamaha also, who at the end of his Kavyalankara says षष्ट्या शरीरं निर्णीतम्. The general trend of the Kavyalankara and the Kavyadarsa will, if well understood, surely prove that the idea of *poetic soul* is wholly foreign to the mind of Bhamaha and Dandin.

Now these considerations make it inevitable that I should once more disagree with Sovani, who writes:—

"The chief writers of this (*riti*) school were Dandin and Vamana." (BCV, p. 396.)

According to Vamana, the *gunas*, not at all identifiable with Alankaras, constitute what is called *riti*—which is the soul of poetry, while the Alankaras are mere accessories to it. This is all that marks his school as fundamentally different from that of Bhamaha, who contemplates no *soul* of poetry, speakes of no *riti*; makes no difference between *gunas* and Alankaras; but holds that the embellished word and sense taken together are poetry. If so, let one judge candidly, whether Dandin belongs to Bhamaha's or Vamana's school. It is shown that Dandin too contemplates no soul of poetry, speaks of no *riti*, and makes no difference between *gunas* and Alankaras. Nor does Dandin seem to maintain, as Vamana does, that the absence of the so-called *gunas* alone will render a literary composition unpoetic. When the consideration of these fundamental principles makes it clear that they do not and cannot belong to one and the same school, it is of little consequence that they use the same terminology such as Gauda and Vaidarbha, *guna* and Alankara. In the same way, the fact that Dandin recognises the two *margas* of poetry, Vaidarbha and Gauda, which Bhamaha rejects, can no more establish their belonging to different schools than the fact that Dandin accepts the three Alankaras, *hetu*, etc., which Bhamaha disfavours. Of this view we find a supporter in Jayaratha. Commenting upon the first passage of the *Alankarasarvasva*—इह हि तावत् भामहोद्भटप्रभृतयः

चिरन्तनालङ्कारकाराः—he observes :—

...इहेत्यादिना । प्रभृतिना दण्ड्यादयः । तावच्छब्दो विप्रतिपत्त्यभावद्योतकः । (p. 3.)

and again,

तदेवं चिरन्तनैः प्रतीयमानस्यालङ्कारान्तर्भाव एवोक्तः । तदुपस्कार्यः पुनरात्मा कैश्चिदपि नाभ्युपगतः । वामनेन प्रतीयमानस्यालङ्कारान्तर्भावमभिदधताऽपि तदुपस्कार्य आत्मा कश्चिदुक्त इत्याह वामनेनेति । (p. 7.)

and again in introducing the line— उद्भटादिभिस्तु गुणालङ्काराणां प्रायशः साम्यमेव सूचितम्— he writes :—

तदेवं विशिष्टपदरचनात्मिकायाः काव्यात्मनाऽभ्युपगताया रीतेः तदातिशयहेतवस्त्वलङ्कारा इत्याद्युक्त्या अन्तर्भावितध्वनयोऽलङ्काराः उपस्कारका इत्येतन्मतम् । अन्यैः पुनरेतदपि प्रत्युक्तमित्याह उद्भटादिभिरित्यादिना । (p. 7.)

After quoting these words of Jayaratha which settle the case once for all, little remains for me to say by way of explanation regarding the question we are inquiring into. So we may, without any fear of contradiction, declare that Dandin is a follower of the Alankara, not the pioneer of the *riti*, school. The result we obtain from this conclusion is that we are in a position to know that Dandin's definition of poetry is the same as Bhamaha's.

## VAMANA.

Vamana too, though following a school quite defferent from Bhamaha's and Dandin's, does not seem to reject this definition of poetry. Probably his first Sutra is intended for giving a definition, though it is not in the usual form of a definition. His employment of the word Alankara there is in the same general sense of embellishment as in Bhamaha and Dandin. But in the next Sutra he uses it in the restricted sense of "figures of speech", excluding *gunas*. Nevertheless, as apparently this narrow sense would not do for the purpose of defini-

